# बापू

मूललेखकः

एफ० सी० फ्रिटास

भाषान्तरकारः

डा० किशोरनाथ झा

सम्पादकः

डा० बाबूराम सक्सेना



गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

इलाहाबाद

१९७९

**सम्पादकमण्डलम्**

| | |
|---|---|
| डॉ० बाबूराम सक्सेना | अध्यक्षः |
| प्रो० सरस्वतीप्रसाद चतुर्वेदी | सदस्यः |
| डॉ० किशोरनाथ झा | सदस्यः |
| डॉ० हरिहर झा | पदेन सदस्यः |

**प्रकाशकः**

प्राचार्यः,

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
इलाहाबाद

**मूल्यम्**...

978-93-831[illegible]-01-4

**मुद्रकः**

इलाहाबाद ब्लाक वर्क्स प्रा० लि०, जीरो रोड, इलाहाबाद।

# प्रकाशक की ओर से

विश्ववन्द्य राष्ट्रपिता महात्मा गान्धी की तपःपूत जीवन-गाथा का सरल संस्कृत में यह प्रस्तुतीकरण इस विद्यापीठ के लिए सौभाग्य का विषय है। जहाँ विद्वानों के उपयोग के लिए हम शोध-विषयक सामग्री प्रकाश में लाने का प्रयत्न करते रहे हैं, वहाँ यह प्रयास संस्कृत के सामान्य पाठकों के उपयोग के लिए समर्पित है।

इस पुनीत कर्तव्य का निर्वाह विद्यापीठ के अनुसन्धान-अधिकारी डा० किशोरनाथ झा ने जिस सफलता से किया है उसके लिए हम उन्हें हार्दिक धन्यवाद देते हैं। यहाँ उन्होंने संस्कृत रूपान्तर की सहजता को इस प्रकार बनाए रखा है जिससे अनुवाद की कृत्रिमता की गन्ध प्रायः लक्षित नहीं होती है।

राष्ट्रिय संस्कृत संस्थान के शासी परिषद के अध्यक्ष केन्द्रीय उपशिक्षामन्त्री माननीय प्रो० देवनन्दन प्रसाद यादव तथा संस्थान के निदेशक डा० प्रभात चन्द्र शर्मा जी के अनुग्रह के कारण यह कार्य विद्यापीठ को सुलभ हुआ। इसके लिए हम उनके प्रति हार्दिक कृतज्ञता ज्ञापित करते हैं। अत्यन्त संक्षिप्त समय में सुचारु रूप से मुद्रण का भार वहन कर सहयोग के लिए हम इलाहाबाद ब्लाक वर्क्स के अधिकारी के प्रति भी धन्यवाद अर्पित करते हैं।

डा० हरिहर झा

का० प्राचार्य

# Opinion

This is a Sanskrit translation of the book 'BAPU' produced by the National Book Trust of India. This translation has been done by Dr. Kishora natha Jha, Research Officer of our Vidyapeetha, which has been looked into by Prof. Saraswati Prasad Chaturvedi and myself. The style and the language of the translation is simple and unostentatious and as such it can be read even by those who know very little Sanskrit. Extracts from it can be adopted in the text books in Sanskrit in our schools. I hope the work will prove popular.

DR. B. R. SAKSENA
Chairman
Sthaniya Prabandhak Samiti
G. N. Jha K. S. Vidyapeetha Allahabad.

Pandit Kishoranatha Jha has Kindly read before me his Sanskrit version of 'Bapu' in English. I discussed here and there his readings and was pleased with his performance.

PROF. SHRI S. P. CHATURVEDI
Ex-Head of the Sanskrit Department
Allahabad University

# आमुख

राष्ट्रपिता महात्मा गान्धी के चरित्र को सुलभ संस्कृत के माध्यम से पाठकों के समक्ष प्रस्तुत करते हुए मुझे अपार हर्ष हो रहा है। महात्माओं के आदर्श चरित्रों का अध्ययन निश्चय ही व्यक्तित्व के विकास में सहायक होता है। भारत के स्वतन्त्रता-संग्राम की असाधारण सफलता के लिए 'बापू' के निष्पक्ष विचार, दृढ सङ्कल्प तथा अनुशासनपूर्ण आचरण वस्तुतः हमारे चरित्र के निर्माण के लिए अनुकरणीय हैं।

'नेशनल बुक ट्रस्ट' द्वारा अंग्रेजी में प्रकाशित 'बापू' के इस संस्कृत रूपान्तर को यद्यपि गान्धी-जन्म शताब्दी के अवसर पर प्रकाशित करने का राष्ट्रिय संस्कृत संस्थान का सङ्कल्प कतिपय अपरिहार्य कारणों से कुछ विलम्ब से पूरा हो सका है। तथापि इसकी उपादेयता में कोई कमी नहीं आयी है।

अनुवाद के समय संस्कृत भाषा की सरलता एवं प्रचलित प्रयोगों के समावेश का विशेष ध्यान रक्खा गया है। फिर भी भाव की मौलिकता का निर्वाह यथासम्भव किया गया है। संस्कृत में सोचकर संस्कृत भाषा का प्रयोग और भाषान्तर में चिन्तनकर संस्कृत भाषा के व्यवहार में जो अन्तर प्रतीत होता है। उनमें प्रथम पक्षके अवलम्बन से ही सम्पूर्ण भारत की अखण्डता की रक्षा होती है। इसका विशेष रूप से यहाँ पालन करने का प्रयास किया गया है। इससे संस्कृत भाषा की मौलिकता पर आँच नहीं आती है।

यहाँ मैं उन गुरुकल्प विद्वद्वरेण्यों के प्रति सप्रणति कृतज्ञता प्रकट करना आवश्यक समझता हूँ; जिन्होंने यह पवित्र कार्य मुझे सौंपा तथा इसमें निर्देशन देकर अनुगृहीत किया है।

इस प्रसङ्ग में स्थानीय प्रबन्धक समिति के अध्यक्ष डा० बाबूराम जी सक्सेना, राष्ट्रिय संस्कृत संस्थान के तत्कालीन निदेशक डा० रामकरण शर्मा (वर्तमान में कुलपति संस्कृत विश्वविद्यालय, दरभंगा) निदेशक प्रवर डा० प्रभातचन्द्र शर्मा, इस विद्यापीठ के तत्कालीन प्राचार्य डा० आर्येन्द्र शर्मा, गुरुवर प्रो० अनन्तलाल ठाकुर, पण्डित श्री सरस्वती प्रसाद चतुर्वेदी तथा मित्रवर डा० जगन्नाथ पाठक विशेष रूप से उल्लेखनीय हैं।

सावधान रहने पर भी शीघ्रता में मुद्रण के कारण प्रूफ की कुछ अशुद्धियाँ रह गयीं हैं। इसके लिए पाठकों के समक्ष क्षमा-याचना ही शरण है।

डा० हरिहर झा का० प्राचार्य की मेरे प्रति अहैतुकी कृपा तथा सत्प्रयास का परिणाम है कि इसी विद्यापीठ से आज इसका प्रकाशन हो रहा है।

'अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया'

कहकर ही मैं इनके प्रति विनीत आभार व्यक्त करता हूँ।

प्रयाग<br>भाद्री पूर्णिमा २०३३

किशोरनाथ झा<br>अनुसन्धान-अधिकारी

# बापू

१८७८ तमे ख्रिष्टीयवर्षे विशालस्य साम्राज्यस्य महतां च राज्यानां राजधान्यां दिल्लीमहानगर्यां महान् समुल्लासपूर्णो जनसम्मर्द आसीत् । बहुमूल्यै रत्नादिभिर्मनोहरैश्च दुकूलैः सर्वथा समलङ्कृताः शताधिका राजानः, महाराजाः 'नबावा'श्च भारतस्य प्रत्येकं प्रान्तेभ्यस्तत्र समागताः । भारते ब्रिटिशशासकस्य तदानीन्तनो राजप्रतिनिधिः स्वकीयया राजसभया सह भारतस्थिताया ब्रिटिशशासकस्य तात्कालिकराजधान्याः कलिकातानगरीतः दिल्लीमहानगरीं प्रति समागत आसीत् ।

'दरबारे' राजशासकानां बृहत्सभायां भागं जिघृक्षवस्ते राजानः सर्वे समुत्सुका बभूवुः । इह भारते प्रथमत एव विक्टोरियाभिधाया इङ्लैण्डदेशस्य राज्ञ्या भारतस्य सम्राज्ञीमुद्घोषयितुं विशेषमवसरमुपलक्ष्य राजसभेयं समायोजिताऽभूत् ।

भारते ब्रिटिशशासनं सनातनं स्थास्यतीति विश्वसन्त राजानोऽन्ये च सर्वे तां सम्राज्ञीं प्रति स्वकीयां राजभक्तिं न्यवेदयन् प्रत्यश्रृण्वंश्च तस्या दृढं संरक्षणम् ।

अस्याः कथाया वक्ष्यमाणनायकः नववर्षदेशीयो दुर्बलो बालस्तदानीं यदि नाभविष्यत् । सत्यं ब्रिटिशशासनमवश्यमेव सदातनं प्राचलिष्यत् ।

बालोऽसौ सावधानतया श्यामपट्टके स्वकीयं लेख्यं लिखन्नासीत् । अस्मदादिरिवायमपि तदवगतये कठिनं प्रयत्नमकरोत् । परं तस्मिन्नपि नवीनतमे वयसि शिष्टाचारमधिगन्तुं दृढाया इच्छाशक्तेर्महत्त्वमवगन्तुमयमारभत प्रयत्नम् । तदीयोऽयं सङ्कल्पः पश्चात् महाबलस्य ब्रिटिशसाम्राज्यस्य सम्मुखं स्थातुं स्वराष्ट्रस्य च कृते तच्छासनं पराजेतुं तमुपाकरोत् ।

'दरबारस्य' एकोनसप्ततितमवर्षानन्तरं विंशतितमो राजप्रतिनिधिः 'विक्टोरिया' सम्राज्ञ्याः प्रपौत्रः भारतस्य स्वातन्त्र्यमुद्घोषयाञ्चकार । एतस्य राजप्रतिनिधेर्नाम 'लौर्ड माउन्ट बेटन' इति । ऊर्ध्वमुल्लिखितो बाल आसीत् मोहन दास गान्धी । अयं हि भारतस्य स्वातन्त्र्यार्थं विहितस्याहिंसात्मकस्य युद्धस्य नायकः । मोहनदास करमचन्द गान्धी शतवर्षाणि पूर्वं १८६९ तमस्य ख्रिष्टीयवर्षस्याक्टूवरमासे द्वितीयायां तिथौ पोरबन्दरनगरे जन्म लेभे ।

नगरमेतत् काठियावाडनगरस्योपकण्ठं समुद्रतटे संस्थितमिदानीं गुर्जरप्रान्ते वर्तते । स बालः चतुर्षु सोदरेषु कनीयान् । तेषु त्रयो भ्रातर एका भगिनी चासीत् । अस्य पिता 'करमचन्द' अथवा 'काबा गान्धी'त्यभिधानः, माता 'पुतली

बाई' नाम्नी चासीत् । जन्मना वैश्योऽसौ बालः गान्धीति स्ववंशानुरूपमुपनाम धारयामास । यद्यपि गान्धीति पंसारीरूपेण ख्यातस्योपनाम, परमस्य पूर्वजाः प्रशासका अभूवन् । अस्य पितामहः पोरबन्दरनगरस्य मन्त्री बभूव । तस्य स्थानापन्न एतस्य पिता पोरबन्दर राजकोट बंकनेर नगराणामभून् मन्त्री । 'कावागान्धी' सत्यसन्धः पराक्रमी उदारश्चासीत् ।

मोहनस्य कृते तस्य पिता सदाचारस्य विनयस्य चादर्श आसीत् । विख्याता महती धर्मपरायणा चासीदस्य जननी । स्वकीयात्मकथायामयं तथाविधामेव तां वर्णयामास । निर्व्याज-श्रद्धाशालिनी साऽमुना बालेन सह प्रतिदिनं देवदर्शनाय मन्दिरमगच्छत् । सुकुमारस्यास्य निश्छले मनसि महत्या दृढायाश्चेश्वरभक्तेर्धार्मिकस्य च स्वभावस्य बीजं तन्मन्दिर-गमनमभवत् । पश्चात् तदेव तस्मिन् बाले भाविनः सुखस्य धर्मविश्वासस्य च हेतुरभूत् ।

सर्वदा लज्जालुरयं बालो मोहनः पुस्तकेष्वेव रमते स्म । जीवनमेवास्य गृहं विद्यालयं च परितः परिभ्रमदासीत्, विशे-षेण तत्रापि भद्रां मातरमभितः, यामयं सर्वदा समपूपुजत् । एतस्याः पावित्र्यं प्रार्थनाभ्यासमात्मशुद्धचर्थमुपवासं चायं विस्मयप्रशंसाभ्यामवलोकयामास ।

सत्यवादिताया अभ्यासमर्जयितुमेव बालसुलभेच्छाऽस्य समजायत । अपकारिभ्योऽप्युपकर्तव्यमित्ययमशिक्षत ।

वर्षर्तौ चातुर्मासः उपोषणस्य कालो भवति । मोहनस्य जननी तावदन्नकणमपि न स्पृशति स्म यावत् सूर्यं न पश्यति स्म । मोहनस्तस्य भगिनी च सूर्यं द्रष्टुं प्रतीक्षमाणावुदतिष्ठताम् । कदाचित् तौ भ्रातरौ दिनकरस्य निशाकरस्य च सन्दर्शनं समुद्घोषयितुमधावतामपि । बहुधा सूर्यः बालयोरनयोराशाभङ्गं विधाय मेघैराच्छन्नो जायते स्म । किन्तु तयोर्जननी सर्वदा शान्ता विश्वस्ता च ते प्रबोधयन्त्यब्रवीत्—'नेच्छतीश्वरोऽद्याहं भक्षयानि' इति ।

मोहनस्य पितरौ स्वयं विद्यालये शिक्षां नाप्तवन्तौ, किन्तु तौ सदा पुत्रं विद्यालयं प्रेषयितुं व्यग्रावास्ताम् । अयं पोरबन्दरराजकोटनगरस्थितौ विद्यालयौ प्रापितः ।

नासीदयं मेधावी परं सदाऽध्ययनशीलः नियतपाठाभ्यासी च । असौ पाठ्यपुस्तकान्येव पठति स्म कदाचित् मनोऽनुकूलानि धार्मिकनाटकान्यपि ।

एकदा गृहसमीप एव यायावरोऽभिनेतृवर्ग एकमभिनयं प्रादर्शयत् । मित्रैः साकं मोहनोऽपि तं द्रष्टुमगच्छत् । हरिश्चन्द्राभिधे तस्मिन् नाटके राज्ञः हरिश्चन्द्रस्य चरित्रं चित्रितम् । तस्य महती कर्मनिष्ठता गहनतमा सत्यभक्तिश्च विख्याता बभूव । यतो ह्यसौ नात्यजत् नियमसंरक्षणावसरे निजधर्मपत्नीमपि ।

नाटकेनानेन मोहने वर्णनातीतं परिवर्तनं सञ्जातम् । अयं चिरं रुरोद, हरिश्चन्द्र इव सत्यसन्धः सच्चरित्रश्च भवितुमाचकाङ्क्ष । कियानपि कठिनो भवतु मार्गोऽयम् । सिद्धं सत्यार्थमस्यात्मसमर्पणम् ।

'गाइल्स' नामा विद्यालयनिरीक्षकः बालानां वर्णविन्यासं परीक्षितुमेकदा विद्यालयमागतः । तदा मोहनदासं विहाय सर्वे बालाः शुद्धं वर्णविन्यासमकार्षुः । ते हि पञ्च साधारणशब्दान् शुद्धं लिखितुमाज्ञप्ता आसन् । मोहनदासः 'केटल' इत्यस्य वर्णविन्यासं कर्तुं नाशक्नोत् ।

आत्मनां सन्दिग्धां प्रतिष्ठां चिन्त्यमानाः शिक्षका आतङ्किता आसन् । ते हि शिक्षका निकटस्थश्यामपट्टतस्तत्पदविन्यासमनुकर्तुमिङ्गितेन स्वान्तेवासिनं प्रेरयामासुः । यद्यपि तदानीं निरीक्षकस्यापि ध्यानमन्यत्रासीत् । तथापि मोहनः सम्मुखमवलोकयन् आत्मानमपवञ्चनातो विरतमकरोत् । अयमात्मन्यनादरमन्वभवत् । सहाध्यायिनामुपहासभूमिः शिक्षकाणां कोपभाजनं च स्यामिति व्यजानात् । वञ्चनातः सत्यस्य कदापि प्रच्छादनं भवितुं नार्हति । मूल्यमेतस्य यत्किमपि भवतु नामेति समवगच्छन्नयं तदा मौनावलम्बनमेवावृणोत् ।

कक्षाया अनन्तरं मोहनस्य शिक्षकोऽकुप्यत् तस्मै । यदा पुनरयं गृहं परावर्तत, तदात्मानं क्षतं शस्त्रहतं हतभाग्यमेकाकिनं चान्वभवत् । परं गभीरतमेऽन्तरात्मनि नवां

द्युतिं नवं सामर्थ्यं चायमन्वभवत् । यद् विहितं तदेव युक्तमित्ययममनुत ।

बालविवाहस्तदानीं बहुप्रथित आसीत् । वयसस्त्रयोदशतमे वर्षे मोहनस्य पाणिग्रहणमभवत् । अस्य धर्मपत्नी कस्तूरबाई समवयस्का आसीत् । अमुमेव बालविवाहं पश्चादसौ क्रूराचारतया वर्णयामास । किन्तु तस्मिन् समये मोहनस्य सविधे विकल्पो नासीत् ।

यद्यपि नितरां कर्तव्यपरायणा कस्तूरबाइ न कदापि लिखितुं पठितुं वा विद्यालयमगच्छत् । तथापि व्यावहारिकेषु विषयेषु पटीयसी सा सर्वदा पत्युश्चिरसहायिका बभूव । आत्मोत्सर्गशीला सा पत्युः कार्येषु साहाय्यमाचरितुं सर्वदा समुद्यता प्रीतिमती सहचरी च तस्य समजायत । समवर्द्धयच्च यथाशक्ति पत्युः सामर्थ्यं प्रतिकूलेषु कायक्लेशकरेषु च कालेषु ।

विवाहो मोहनस्य शिक्षायां गतिरोधमकरोत् । वर्षमेकमस्य विद्यालये वृथाऽतीतम् । कालकृतायाः क्षतेः पूर्तये द्विगुणितां प्रोन्नतिं लक्ष्यीकृत्याध्ययनमनेनारब्धव्यमित्येतदर्थमस्य शिक्षकाश्चिन्तिता बभूवुः । किन्तु मोहनः स्वयमात्मानमध्ययने सोत्साहं न्यवेशयत् प्राचेष्टयच्चापेक्षितं भागं सम्यगधिगन्तुम् । तस्य श्रमास्तदीयशीर्षं साफल्येनालंचक्रुः ।

मोहनः सर्वदा मन्दः संशयालुः सलज्जश्च छात्र आसीत् ।

यद्यप्ययं कक्षायाः साफल्यादधिकं किमपि सन्धाय कठिनं परिश्रममकार्षीत् । तथापि दृढं चरित्रमवदातं च यशः प्रथयितुं प्रायतत ।

यद्यपि 'केटल' इति वर्णविन्यासघटना प्रत्यपादयदस्य सत्यप्रियत्वम् । तथापि गतेषु वर्षेषु सर्वेषां शिक्षकाणामयं प्रीतिमानुकूल्यं च समुपार्जयत् ।

प्रसिद्धा लोकप्रचलिता च क्रीडा मोहनं कदापि नाकृष्टवान् । अयमुन्मुक्तवातावरणे वेगतो दीर्घभ्रमणस्य प्रणयी बभूव । नियमितमेतदाचरच्च । आजीवनं व्यसनमेतत् प्रचलितम् । यथाऽयं पश्चादगादीत्—वेगतो दीर्घभ्रमणं तस्य सामर्थ्यमुत्साहं च समवर्द्धयत् । एवमोजस्वी कर्मनिष्ठः सत्यसन्धश्चायं जीवने समवर्द्धत ।

एवं सत्यपि मोहनोऽपि मनुष्य एवासीत् । अतएव लोभेनाकृष्टोऽचोरयत् सुवर्णखण्डमेकदा । किन्तु त्वरितमेवायमन्वतपत् । न कदापि पुनः स्तेयं विधास्यामीति समकल्पयत् निरचैषीच्च पितुः समक्षं चौर्यमिदमुरीकर्तुम् । परमस्य पिता तदानीं रुग्ण आसीत् । तस्मात् मोहनोऽतिदुःखमन्वभवत् । नाधिकं कालं यावदयं चौर्यं गोपायितुमशक्नोत् । फलतः आत्मानं दण्डार्हं मत्वा पत्रमलिखत्, दण्डप्रकारं च पप्रच्छ । यदाऽस्य पिता पत्रमपठीत् कपोलयोरश्रूणि पत्रमार्द्रीं कुर्वन्ति न्यपतन् । पिता आत्मजस्य सच्चारित्र्येण प्रभावितः पत्रं विनाश्य सुतस्यापराधममृष्यत् ।

पश्चात् मोहनो लिखति स्म—'तदाप्रभृति सत्यस्य भाषणं मम व्यसनं सञ्जातम्' इति । सत्यं स्वतः सामर्थ्यशालि भवति कदापि नात्र प्रमदितव्यम् इत्यपि प्रत्यवोचत् ।

यदा मोहनः षोडशवर्षदेशीय आसीत्, अस्य पिता स्वर्गमारोहत् । अन्तिमे समये यथाशक्ति पितरमयमसेवत । समवाहयत् पितुश्चरणौ असुखयच्च तं यावन्नालभत निद्राम् ।

अयं पितुः शुश्रूषया महान्तं सन्तोषमनुभवन् सुपुत्रता।मवाप्नोत् । किन्तु दुर्योगवशात् पितुः प्राणत्यागसमयेऽयं सन्निधौ नासीत् । एतदर्थमाजीवनं मोहनः दुःखितोऽभूत् ।

१८८७ तमे ख्रिष्टाब्दे अष्टादशवर्षदेशीयो मोहनः अहमदावादनगरात् माध्यमिक (मैट्रिक) परीक्षामुदतरत् । अधुना जीविकायाश्चयनस्य समागतोऽवसरः । रोगिणां साहाय्यं विधातुमयं चिकित्सको भवितुमैच्छत् । परं तदर्थं परिवारस्यानुमोदनं नाप्नोत् ।

स्थाने खलु, कश्चन पुरातनः सुहृद् विचारकश्च विधिशास्त्रमधिगन्तुम् इङ्लैण्डदेशं प्रेषयितुमेतं सममन्त्रयत्

मोहनः विदेशगमनविचारमधिकृत्य नितरां प्राहृष्यत् । किन्तु धर्मपरायणा जननी नामुं विचारमसमर्थयत् । इङ्लैण्ड देशवासिनामाश्चर्यकरैर्व्यवहारैर्भीता सा व्यज्ञासीत् तदीयप्रलोभनानि, यत्रास्या आत्मजः प्रदर्शनीयतां गच्छेदिति ।

अयमभ्यर्थयन्मातरं तत्र गमनस्यानुमतिमवाप्तुम् । प्रति-श्रुतवांश्च तां मांसमदिरादितो दूरमात्मानमवस्थापयितुम् । अन्ततस्तस्यास्तुष्टये शपथमप्यकरोत् । ततोऽयमगच्छत् वम्बईमहानगरीं यत इङ्लैण्डदेशाय पोतमध्यारोहत् । अयं १८८८ तमे ख्रिष्टाब्दे अक्टूवरमासे इङ्लैण्डदेशं संप्राप्नोत् ।

इङ्लैण्डदेशे बहुविधा बाधा अयमसहत । विशेषेणा-ङ्ग्रेजपद्धत्या जीवनयापनस्यासौकर्यमासीत् । अयं भोजनस्य महतीं समस्यामन्वभवत् । यद्ययं निरामिषं भोजनं संप्राप्नोदपि सर्वथा तत् स्वादरहितमभूत् । कानिचन दिनानि बहुव्ययसाध्ये भोजनालये व्यतीत्य शीघ्रमेवानुकूलतरं स्वल्पव्ययसाध्यं छात्रावासं समागच्छत् । तथापि अयमात्मानं दिङ्मूढमसशयं च प्रत्येति स्म ।

एकदा लोकप्रसिद्धे भोजनालये एवंविधं सहचरं लब्ध्वा सुहृदस्य दुःखितोऽभूत् । यतो हि नायं तत्र तेन सहाभुङ्क्त । क्रुद्धोऽस्य सुहृदमुमध्यक्षिपत्—सभ्यसमाजमध्ये नितरामभद्रो भवानिति । मित्रस्य टिप्पणमिदं मोहनमधिकमपीडयत् शोचितुं विवशमप्यकरोत् ।

आङ्ग्लपद्धत्यात्मनि भद्रपुरुषतामापादयितुमयं निर-णैषीत् । परिचितं वेशमवाप्तुमयं समादिशत् क्रीतवांश्च तदानीं प्रथितं कर्णिकाराकारमुच्चोष्णीषं सौवर्णं घटीबन्धसूत्रं च । किन्त्वेतस्य सरलालकावली कुटिलालकत्वं नागच्छत् ।

अयं चास्य प्रक्रमस्य प्रथमश्चरण आसीत् । आङ्गल-पद्धत्या सम्पूर्णतः भद्रपुरुषतामाप्तुं संगीतनृत्ययोर्वक्तृतायां च पाटवमपेक्षितमासीत् । अयं सहनृत्यमशिक्षत । क्रीतवांश्चैकां वीणाम्, न्ययोजयच्च शिक्षकं पाश्चात्यं संगीतकं फ्रेञ्चभाषां च शिक्षयितुं, तस्यां प्रागल्भ्यं चावाप्तुं प्रायतत ।

महताऽभ्यासेनापि नास्य सिद्धाः मनोरथाः । अस्य चरणौ सङ्गीतेन सह परिक्रमितुं न प्राभवताम् ।

पाश्चात्यं संगीतकमधिगन्तुमस्योद्यमः विफलो बभूव । अयं पश्चादवर्णयत्—"आङ्गलपद्धत्या भद्रपुरुषतामनुकर्तुमयं दुःखमयं मासत्रयं व्यतीत्य तथ्यमवागच्छत् यदात्मानं मूर्खं प्रतिपादयितुमहं यत्नशील आसम् । विधिशास्त्रमध्येतु-मिङ्लैण्डदेशमागतोऽहं कथमेवं बहुमूल्यं समयं कष्टो-पार्जितं भ्रातृधनं च जले प्राक्षिपम्" इति चिन्तयन् तत्काल-मेवैतत् समापनीयमिति निर्णयमकरोत् ।

तस्मात्, मोहनः लोकप्रथितानि निखिलान्याचरणानि वेशभूषादीनि चात्यजत् । इदानीमयमेकाकिनोऽनुरूपे प्रकोष्ठे न्यवसत्, स्वयं च पाकमकरोत् । गोधूमचूर्णस्य नारिकेलस्य च प्रातराशं विधाय मध्याह्ने चपेटिकां नारिकेलं चाभक्षयत् । दिनस्यैकस्य व्ययस्तु रूप्यकमेकमासीत् । एतेनास्य व्यर्थ-चिन्तातो मुक्तं मनः सुसन्तुष्टश्चाभूदात्मा ।

इदानीमधिकं स्वतन्त्रं समयमासाद्य भूरि पठितुमयम-शक्नोत् 'लण्डन'स्य माध्यमिकपरीक्षामुत्तीर्णश्च । लैटिन

फ्रेञ्चभाषयोरध्ययनमप्यकरोत् । तस्मिन्नेव काले विधिशास्त्र-मधिगन्तुं प्रायतत ।

अयं स्वकीयेन भोजनेन साकमनेकप्रयोगाणां परीक्षण-मकरोत् । स एतद्विषयकाणि सर्वाणि पुस्तकानि यावच्छक्यमधीत्य भोजने निरामिषत्वमधिकं स्वास्थ्यकरं भवतीति व्यजानात् ।

लण्डननगरे निरामिषभोजिभिः साकं मैत्रीं विधाय यत्रायं तदानीं निवसन्नासीत्-तत्र शाकाहारिणां सभां प्रस्थापयामास । स्वयं तत्सभायाः सचिवो बभूव । त्वरितमेव लण्डन-नगरस्थितानां शाकाहारिणां परिषदं स्थापयांबभूव ।

किन्तु यदा तत्र परिषदोऽधिवेशनेऽयमुपस्थितस्तदा वक्तुं नितरां लज्जमानो विचारविनिमये भागं ग्रहीतुमसमर्थोऽभूत् ।

सत्यं प्रति निष्ठावतां कृते मौनं शक्तिशालि शस्त्रं भवतीति कथयन्नात्मानमयं समाश्वासयत् । तत् (मौनं) मिथ्याभाषणतस्तं बहुधा न्यवारयत् ।

१८९१ तमे ख्रिष्टाब्दे जूनमासस्य दशम्यां तिथावन्तिमस्य नवमासावधिकस्य गम्भीरतमाध्ययनस्यानन्तरं मोहनः विधिज्ञसभायामामन्त्रितोऽभूत् । यतो ह्ययं विधिशास्त्रस्य परीक्षामुत्तीर्णस्तस्मात् नामाङ्कनमस्य इङ्लैण्ड-देशीयन्यायालयस्य विधिशास्त्रज्ञानां नामावलौ सञ्जातम् । इदानीमयमधिकृतोऽधिवक्ता बभूव ।

अपरस्मिन्नेव दिने इङ्लैण्डदेशतः स्वदेशं प्रति गन्तव्यमासीत्। अतएवायं निरामिषभोजिनः सुहृदः प्रस्थानकालिकस्य भोजनस्य कृते न्यमन्त्रयत्। नूनं, तत्र भाषणं विधेयं स्यादिति मोहनः सावधानतया तदर्थमुद्युक्त आसीत्, अकरोच्च स्वकीयं भाषणं स्मृतिपथारूढम्। हन्त, भाषणस्यावसरे मुद्रितमुख एव तस्थौ। अपटुतया शब्दमुच्चारयन् प्रारम्भिकस्य वाक्यस्यावृत्तिमकरोत्। यद्यपि विनोदीभवितुं प्रायतत, किन्तु नाध्यगच्छत् साफल्यं तत्रापि। आकुलचित्तः सन्नवातिष्ठत। एष हि तस्य नितरामभद्रोऽनुभव आसीत्।

यदाऽयं भारताय पोतारूढोऽभूत् तदाऽस्य हृदये शान्तिर्नासीत्। सत्यम्, अहं विधिशास्त्रस्य परीक्षामुत्तीर्णः, विधिवक्ताऽपि बभूव। किन्तु किमहं भारते साफल्यं लप्स्यासि? भारतीयन्यायालये विधिज्ञरूपेण व्यवहर्तुं किमहं समर्थः स्याम्? तत्र भाषणं देयं भवेत्, तदपि, न मित्राणां समक्षमपि तु अपरिचितानां मध्ये। एतदतिरिक्तं, जानामि कियत्परिमाणमहं भारतीयं विधिशास्त्रम्? इत्ययं मनस्यचिन्तयत्।

एवं चिन्तयतस्तस्य लण्डनावाससुखं किञ्चिद् विरसमिव जातम्। जननीसमागमसुखं प्रतीक्षमाणस्तदीयं वचनं पर्यपालयम् इति तामभिधातुं समुत्कण्ठितश्चासीत्।

कियान् स्नेह आसीन्मातरं प्रत्यस्य!

बम्बईनगरे यदाऽयमवारोहत् तदैव मातुः स्वर्गवासवार्ता

श्रुत्वाऽस्य हृदयं विदद्रे । यथा पश्चाल्लिखितमनेन— 'नाहमेतदर्थं दुःखप्रकाशमकरवम्, मया नियन्त्रितान्यश्रूण्यपि। जीवनं तथा व्यतीतं यथा न काचन घटना घटितेह' । इङ्लैण्ड देशेऽभ्यस्तस्यात्मनियमनस्य परिणतिरियमासीत् ।

राजकोटनगरे कानिचन दिनानि स्थित्वा स्वीयं विधिज्ञ-जीवनमारब्धुं बम्बईमहानगरीं प्रत्यागतोऽयम् । अस्य प्रथमा-भियोगवादः लघुविवादनिर्णायके न्यायालये श्रुतोऽभूत् । गान्धीमहोदयस्य पारिश्रमिकं त्रिंशद्रूप्यकमितमासीत् ।

किन्तु साक्षिगणः प्रश्नकालेऽयं किमपि वक्तुमेव नाश-क्नोत् । नारब्धवान् किञ्चदप्ययम् ।

न्यायालये विचित्रं मौनं व्यराजत । कम्पमानगात्रः गान्धीमहाशयो महतीमपकीर्तिमन्वभवत् । आत्मनोऽन्ततः पराजयं स्वीकृत्य समुपाविशच्च । न्यायालये विद्यमाना-स्तदानीन्तनाः सर्वे हि तदीयमाचरणमुपाहसन् ।

गान्धीमहाशयः राजकोटनगरं पुनः परावर्तत । पर-मत्रापि दुःखमेव लेभे । इहैतस्य भ्रातुर्विरोधेऽभियोग एक आसीत् यश्च साहाय्यमपैक्षत । यद्यपि गान्धीमहाशयो नैच्छदुपकर्तुं भ्रातरं तथापि राजकोटनगरस्थितं ब्रिटिशशासकस्य राज-नैतिकं प्रतिनिधिं प्रति निजभ्रातुः पक्षतोऽधिवक्तुमनुनीतोऽ-भूत् । स एवायं प्रतिनिधिर्येन सहास्य एकदा इङ्लैण्डदेशे परिचयो बभूव ।

यदाऽयं गान्धीमहाशयस्तदीयप्रतिनिधिना सह मिलितुं गतस्तदैतं प्रति तेन नितरामभद्रमाचरितम् । तत्प्रतिनिधिरस्य वक्तव्यं श्रोतुमपि नोद्यतः बहिर्गन्तुमेतमादिशत् । गान्धीमहोदयः स्वकीयं वक्तव्यमुपस्थापयितुमाग्रहशीलो बभूव । परं स प्रतिनिधिः स्वकीयं परिचारकमाहूय तद्द्वारा तं प्रकोष्ठाद् बहिर्निष्कासितवान् ।

महदवमाननमेतत् स्फुटं प्रादर्शयत् ब्रिटिशशासकस्य क्रूरतमाचरणम् । अयमगादीत्—'विक्षोभोऽयं मम जीवनक्रममेव पर्यवर्तयत्' ।

तथा हि एकवर्षावधये दक्षिण-अफ्रीकादेशे भारतीयव्यापारिसंस्थाया विधिव्यवस्थापकपदं सञ्चालयितुमयमुक्तः सहर्षं स्वीकृतवान् प्रस्तावम् । १८९३ तमे ख्रिष्टाब्दे अप्रैलमासे बम्बईमहानगर्यां पोतमारुह्य मासानन्तरमयं दक्षिण-अफ्रीकादेशस्य नेटालनगरेऽवारोहत् ।

अतिपीडाकरं दृश्यं दक्षिण-अफ्रीकादेशे दृष्टमनेन । एतस्य स्वदेशीया जनास्तत्र तिरस्कृता नितरामुपेक्षिताश्चासन् । शिक्षासम्पन्ना अपि भारतीया दक्षिण-अफ्रीकावासिभिर्यूरोपदेशोद्भवैश्च साकं सम्मिलितुं नाधिकृता अभूवन् । एते हि वर्णतः श्यामास्तद्वर्णं चाभद्राणां प्रतीकतया प्रतीतमासीत् । बहवस्तेषां भारवाहक (कुली) रूपेणाभिहिता आसन् । एतदपमानस्य सङ्केतः । गान्धिमहोदयः भारवाहकवर्गस्य विधिवक्तेति नाम्ना प्रथितोऽभवत् ।

त्वरितमेव गान्धीमहाशयः व्यवहारेऽस्यापमानस्यार्थ-मन्वभवत् । प्रिटोरियानगरं प्रति धूम्रयानेन यात्रां कुर्वन्नयं प्रथमकक्षस्य निदर्शनपत्र (टिकट) मादाय निर्दिष्टकक्षे समुपाविशत् । किन्तु न चिराय तत्रातिष्ठत् । निर्दिष्टस्थाने यदा धूम्रयानं व्यरमत् यूरोपदेशीयः कश्चन यात्री तत्रागच्छत् । कक्षाभ्यन्तरे श्यामवर्णं मानवमेनं वीक्ष्य धूम्रयानाधिकारिणः सविधे प्रसङ्गममुमुपालभत ।

ते हि धूम्रयानाधिकारिणः कक्षमेतं विहाय यात्रिक-सामग्रीसंरक्षणकक्षे यात्रां कर्तुं गान्धिमहोदयमकथयन् । 'मम सविधे प्रथमकक्षस्य निदर्शनपत्र(टकट)मस्ति' इत्यनेनोत्तरितम् । किन्तु न चिरादेवारक्षकोऽमुमाक्रम्य वहिरक्षिपत् । बहुशैत्य-करी यामिन्या इयं नववादनवेला आसीत् । शीतेन वेपमानोऽयं सम्पूर्णां रात्रिं प्रतीक्षालयेऽयापयत् ।

पुनः प्रभाते गान्धीमहाशयः चार्ल्सटाउननगरं प्रति गन्तुं धूम्रयानमगृह्णात् । अत्रायं जौन्सबर्गनगरस्य कृते साधारण-यानस्य निदर्शनपत्रं क्रीतवान् । परमत्रापि पुनः गौराङ्गा-अभ्यन्तरे यात्रां कुर्वन्त आसन्, अतोऽयं सारथिस्थाने समुप-वेष्टुमुक्तः ।

शान्त्यर्थं तथैवाकरोदयम् । मध्येमार्गं यानविरामस्थले यथाकथञ्चित् कश्चन गौराङ्गस्तत्र समागत्य निष्ठुरतया गान्धीमहाशयं समाज्ञापयत् स्वकीयं स्थानमस्मै प्रदाय स्वयं कुचैलेनाच्छादितं पादफलकमध्यासितुम् ।

गान्धीमहाशयस्ततो न सञ्चलितः । पश्चादसौ गौराङ्ग-स्तस्य बाहुं गृहीत्वाऽधो निक्षेप्तुं प्रायतत । तदभद्रतमं दृश्य-मासीत् । भाग्येन परित्रातुमेतमन्ये समागताः । अत एवानु-मतोऽयं स्वकीय आसने संस्थित्य निर्बाधं यात्रां प्रवर्तयितुम् ।

इमे पीडाकरा अनुभवा दक्षिण-अफ्रीकादेशे स्थितताना-मात्मीयजनानां दुःखजातान्युन्मूलयितुं गान्धीमहाशयस्य हृदये गरीयसीमिच्छामुत्पादितवन्तः । यदाऽयं प्रिटोरियानगरं सम्प्राप्तवान्, तदा तत्र भारतीयैः साकं सम्मेलनमारभत । पृथग्रूपेण ते सुकरतया गौराङ्गैरुत्पीडिता भवन्तीति तानेक-सूत्रे निबद्धुमयमैच्छत् ।

एतत्कृतस्य प्रयत्नस्य परिणामरूपैका भारतीयानां सभा समायोजिताऽभूत् । अस्यां जनतायाः समक्षं प्रथमतः गान्धी-महाशयस्य भाषणं सञ्जातम् । एकतायाः प्रयोजनमधिकृत्या-यमभाषत । किन्तु व्यापारे सत्यनिष्ठाया महत्त्वमावश्यकत्वं चादाय समवाबोधयत् सर्वान् । स्वच्छस्य स्वास्थ्यकरस्य च जीवनयापनस्यावश्यकतामपि प्रत्यपादयत् । अन्ते परिषदमेकां संस्थापयितुं तानवोचत् । या हि नैजं शुभमेतेषां विदधती दैन्यम् अपहरिष्यति, येनैते पीडितास्तिष्ठन्ति ।

वर्षस्यैकस्य कृते गान्धीमहाशयो दक्षिण-अफ्रीकादेशं समागतोऽभूत् । किन्तु प्रयोजनमेतस्य सेवायाः पश्चादप्य-वशिष्टमासीत् । अतो वर्षत्रयं यावदधिकमयं समतिष्ठत ।

गान्धीमहाशयः न्यायालयेन विनाऽभियोगवादानां निर्णयमकरोत् । यदर्थमयं दक्षिण-अफ्रीकादेशमागत आसीत् ।

अयं बहूनां भारतीयानां साहाय्यमकरोत् । न्यायालये स्थितेषु तेषामभियोगवादेषु 'बालसुन्दरम्' नामधेयस्य श्रमिकस्य सुपरिचितोऽभियोगवाद एक आसीत् । यूरोपदेशीयेन स्वामिना बहुधाऽयं नितरां ताडित आसीत् । यदा हि निर्दयतमात् स्वामिनः सकाशात् निर्दयतरस्य स्वामिनः सविधे स्थानान्तरित आसीत् ।

स्वकीयं परिवारं नेतुं, तत्रत्यैः पीडितानां दक्षिण-अफ्रीकादेशस्थानां हतभाग्यानां भारतीयानां समाचारं प्रसारयितुं चायं १८९६ तमे ख्रिष्टाब्दे भारतं परावर्तत । तस्मिन्नेव वर्षे दिसम्बरमासे समुद्रमार्गगतं संवादं संप्राप्य तत्कालं दर्बन-नगरं गन्तुकामोऽयं प्रस्तुतोऽभूत् । धर्मपत्नीं बालकौ भ्रातुष्पुत्रं चादाय गान्धीमहाशयस्तत्र प्रत्यागच्छत् ।

भारते तदीयभाषणस्य समाचारः गौराङ्गान् क्रोधाकुलानकरोत् । एतस्य पोतादवरोहमुपरोद्धुमेते यावच्छक्यं प्रायतन्त । पञ्चविंशतिदिनानि यावत् हारबारनगरे द्वावपि पोतौ प्रतीक्षायामवस्थापितौ, याभ्यां पोताभ्यां गान्धीमहाशयेन सहाष्टशतपरिमिता भारतीया यात्रामकुर्वन् । दादा अब्दुल्ला तत्सहयोगिनश्च पोतस्वामिनस्तौ परावर्तयितुमुक्ताः किन्तु ते तदुक्तेः प्रत्याख्यानमकुर्वन् ।

यदाऽवरोहणायैतेऽनुमता बलात्कारेणातङ्किताः कृताः। तमसां प्रसारं यावत् तत्रैव प्रतीक्षायामवस्थातुं गान्धीमहाशयः सदुपदिष्टश्च। किन्तु मानमर्दनमेतदयं नान्वमन्यत। यूरोपदेशीयेन विधिवक्त्रा मित्रेण सह दिवाप्रकाश एव समुद्रतटे पर्यटनं व्यधात्। परं तत्कालमेव समापतितो विघ्नः।

केचन बालास्तस्योपरि प्रस्तरशकलानि न्यक्षिपन् पलायिताश्च। यथा ते गताः जनसङ्कुलमेकत्रीभूयैतमन्वगच्छत्। अकस्मात् कश्चन बलिष्ठः पामरः गान्धीमहाशयं ताडयन् न्यक्षिपच्चाधस्तम्। केचन पुनस्तस्योपरि प्राक्षिपन् प्रस्तरशकलानि, अङ्गरक्षकं वस्त्रं विदारितवन्तश्च। भृशमाहतः संज्ञाशून्यप्रायश्च गान्धीमहाशयः परित्राणाय कस्यचिद् गृहस्य प्रावारे समानीतः। तत्र कञ्चित् कालमवस्थित्य लब्धचेतनः पुनः प्रारभत पर्यटनम्।

प्रधानारक्षकस्य पत्नी तदानीं भाग्येन तेनैव पथा गच्छन्ती पूर्वत एव गान्धीमहाशयं सम्यक् परिचिन्वन्ती निर्भीकतया स्वकीयं छत्रं प्रसार्य तमरक्षयत्। पश्चादुभौ सहैव पर्यटतां सम्प्राप्तावारक्षकस्थानम्। यस्मात् स्थानात् स निर्बाधं निजमित्रस्य गृहमगच्छत्।

नेटालनगरस्थानां भारतीयानां संघस्य संस्थापनायै श्रमिकवर्गान् उपकर्तुं च प्राचालयत् स्वकीयं कर्म गान्धीमहाशयः। १९०१ तमस्य खिृष्टाब्दस्यान्ते भारतमयमागच्छत्। पुनरत्र दक्षिण-अफ्रीकादेशे यदि ममावश्यकता स्यादहं पुनरागमिष्याम्यवश्यमिति प्रत्यशृणोच्च।

यदाऽयं समुद्रमार्गागतं संवादमाप्नोत् सत्यमयं दृढवचनः १९०२ तमस्य ख्रिष्टाब्दस्य मार्चमासे शीघ्रं समागतः दक्षिण अफ्रीकादेशम् । इदानीं द्वादशवर्षाणि यावत् भारतस्य दर्शनतोऽयमपवञ्चितोऽभूत् ।

भारतीया अनुमतिपत्रेण विना ट्रान्सवालनगरे प्रवेष्टुमनुमता नासन् । किन्तु गान्धीमहाशयस्तदेव नगरं तेषां कृते कर्मानुष्ठातुं नियतमकरोत् । अयं विधिवक्तृणां नैजं कार्यालयं जौन्सबर्गनगरे संस्थापयमास । इत एव चिरात् पीडितानां स्वदेशीयानां कृते स्वकार्यारम्भं कृतवान् ।

१९०६ तमे ख्रिष्टाब्दे अगस्तमासस्य द्वाविंशतितमायां तिथौ ट्रान्सवालनगरस्य प्रशासकः राजाज्ञामुद्घोषितवान् यदष्टवर्षीयाणां तदधिकवयसां च सर्वेषां भारतीयानां निबन्धनमावश्यकमिति । तत्र निबन्धने तस्य नाम निवासस्थानं जातिर्वयः नियोगादिकं च सम्यक्तया प्रतिपादयितुं राजकीये कार्यालये प्रत्येकं जनानां गमनमावश्यकमासीत् । अङ्गुष्ठादिचित्रमात्मपरिचायकं च चिह्नं निर्देष्टव्यमभूत् । सर्वदा सर्वैर्भारतीयैस्तत् प्रमाणपत्रं सहैव संरक्षणीयम्, यतो हि राजमार्गादौ पर्यटनावसरेऽपि तद् दर्शयितुमुक्ते सति प्रदर्शनीयं स्यात् । एतस्य विरोधिनस्तु दण्डस्य कारागृहस्य विवासनस्य च भाजनानि भवेयुरिति ।

एषा हि भारतीयानामपमानकरी राजाज्ञासीत् । तस्मात् भारतीया एतस्या विरोधे योद्धुं कटिबद्धा अभूवन् । जौन्स-

बर्गनगरस्य रङ्गशालायां समायोजितायां सभायां त्रिसहस्र-परिमिता भारतीया जना गान्धीमहाशयस्य शुभाशीर्वाद-मादाय संस्मृत्य चेश्वरमात्मनिबन्धनस्य विरोधे शपथं गृहीत-वन्तः। किन्तु ट्रान्सबालनगरस्य प्रशासकस्तां राजाज्ञां यथार्थतश्चरितार्थयितुं कृतसङ्कल्प आसीत्।

यत इयं राजाज्ञा कृष्णवर्णीयानां कृते प्रसारिता, तस्मात् पश्चात् 'कृष्णाध्यादेश' नाम्ना प्रथिता। १६०७ तमे ख्रिष्टाब्दे जुलाईमासस्यान्तिमायां तिथौ व्यवहारे समागता। अस्यां तिथौ प्रिटोरियानगरस्य यावनधर्ममन्दिरप्राङ्गणे भारतीया बहुसंख्यायामेकत्रिता अभूवन्। पुनरत्रात्मनिबन्धनं प्रमाण-पत्रार्थमावेदनं च विरोद्धुं निर्णीतवन्तस्ते।

ते हि वचनस्य यथार्थतः परिपालका आसन्। अतएव ट्रान्सबालनगरे समुपस्थितेषु त्रयोदशसहस्रपरिमितेषु भारती-येषु पञ्चशतेभ्योऽप्यूना आत्मनिबन्धनमकारयन्। एतद्धि विस्मयकरमेकतायाः प्रदर्शनं गान्धीमहाशयस्य च महान् विजय आसीत्।

किन्तु प्रशासकः पृष्ठाघातमकरोत्। चतुर्दशदिनाभ्यन्तरे ट्रान्सबालनगरं विहातुं भारतीया नेतारोऽभिहिताः। किन्तु तत्रैव ते समतिष्ठन्त। अतएव निगृहीताः परीक्षणाय न्यायालयं नीताश्च। गान्धीमहोदयः यथासम्भवं कठोरतमं दण्डमात्मने प्रदातुं न्यायाधीशमवोचत्। मासद्वयावधिकं कारागारेऽवस्थान-मस्य दण्ड्यतयाज्ञापयत्। त्वरितमेव सार्धशतकमिता भारतीयाः कारागारे क्षिप्ताः।

कश्चन समाचारपत्रस्य सम्पादकः स्वयमेभ्यः साहाय्यं प्रायच्छत् । किन्तु भारतीया नेतारः स्फुटमवोचन्—गान्धी-महाशयेन विना नैते किमपि निर्णेष्यन्तीति । लिखितमनुबन्ध-पत्रमेतेषां पुरः कारागारे प्रेषितम् । यत्र लिखितमासीत् यत् प्रशासकः राजाज्ञामिमां परावर्तयितुमर्हति यदि भारतीयाः स्वेच्छयैवात्मनिबन्धनं कुर्युरिति । तेषां प्रमाणपत्रेषु विहि-तानां विषयाणां विवरणमधिकृत्य तैरपि परामर्शः विधा-स्यत इति ।

दिनद्वयानन्तरं जेनरलजानस्मुट्सनामकेन ट्रान्सबाल-नगरस्य प्रधानमन्त्रिणा सह गान्धीमहाशयः सम्मिलितः । प्रधानमन्त्री 'कृष्णाध्यादेशं' निरस्तुमनुमेने । गान्धीमहाशय-स्तत्कालमेव मुक्तोऽभूत् । तत्सहचरास्तु प्रभातेऽपरस्मिन् मोचिताः ।

प्रिटोरियानगरमागत्य सहस्रजनानां मध्ये निशीथ एवाय-मनुबन्धपत्रस्याभिप्रायं प्रकाशयामास । यतो हि जनता भया-कुला आसीत् । किं यावदस्मदादयः स्वकीयं निबन्धनं न कुर्युस्तावन्नेयं राजाज्ञा निरस्ता स्यात् ? एतां जिज्ञासां समा-दधन् गान्धीमहोदयो भद्रपुरुष इवानुबन्धं परिपालयितुं तत्प्रयोजनं प्रतिपादितवान् । बहुभिरिदं ज्ञातं परं कैश्चिन्नाव-गतमपि ।

उषसि गान्धीमहाशयो निबन्धनकार्यालयस्याभिमुखं परिभ्रमंस्त्रिभिः पठानजनैरनुगतोऽभूत् । ते चामुं मण्डली-

कृत्य प्रष्टुमारभन्त । अकस्मात् तेष्वेकः गान्धीमहाशयं यष्टिकया दृढं प्राहरत् । अपरावपि मुष्टिभिर्घातयन्तावधो निक्षेप्तुं प्राचेष्टताम् । अयं निश्चेतनोऽपतत् ।

यदाऽयं चैतन्यमलभत तदा प्रथमं मीर आलम नामकमात्मन आक्रमणकारिणमक्षमत । निगृहीतोऽसाविति शृण्वन् तस्य मुक्तयेऽभ्यर्थयत् ।

गान्धीमहाशयः धैर्येण शान्त्या च समानां विपत्ति सोढुमुद्यत आसीत् । जौन्सबर्गनगरे सम्पन्नाया विशालसभाया अनन्तरं बहिरागच्छन्नयं मण्डपद्वारे प्रच्छन्नतयाऽवस्थितं कञ्चन जनमपश्यत् । अयं तस्यान्तिकमागत्य तदीयं बाहुं स्वस्योपरि निधाय तमनुरागवचोभिः प्राबोधयत् ।

स च नितरां प्रमत्त इव प्रतिभातिस्म । अतः पश्चादवोचत् सर्वम् । यद्यप्युभौ किञ्चिदन्तराले पर्यटन्तावास्ताम् तथापि मन्द्रस्वरेण वार्तालापमकुरुताम् । पुनरसौ किमप्यस्मै समर्प्य पलायितः ।

पूर्वं स गान्धीमहाशयं व्यापादयितुमैच्छत् किन्तु इदानीं सौम्यः सन् स्वयं तत् क्षुरं तस्मै प्रत्यर्पयत् । अधुनाहं निगृहीतोऽभविष्यम् यदि तं रिपुतया पर्यग्रहीष्यम् । दिष्टचा स एवेदानीं मदीयः सुहृदभवत् इत्यवोचत् सः ।

स्मुट्सनामकोऽसौ प्रधानमन्त्री निजवचनं नैव प्रत्यपालयत् । 'कृष्णाध्यादेशं' निरस्तुम् प्रत्यषेधयत् । पुनरेकवारं

भारतीयास्तत्रैव यावनधर्ममन्दिरे एकत्रीभूय महति कटाहे स्वकीयानि प्रमाणपत्राणि वह्निसादकुर्वन् । यथोर्ध्वं निरगच्छद् धूमः अन्येऽपि अग्रेसराः सन्तस्तत्र कटाहे निज-प्रमाणपत्राणि प्राक्षिपन् । सहस्रद्वयमितं प्रमाणपत्रं विनष्टम् । भारतीया नेतारः गान्धीमहोदयेन सह पुनर्निगृहीताः । किमव-शिष्टम् ? भारतीया इदानीं ट्रान्सवालनगरे स्थातुमनधिकृताः कस्मिंश्चिदपि क्षणे नगराद् बहिर्गन्तुमाज्ञप्ताः स्युः । ये च देशान्तराधिवासनमवज्ञाय आज्ञाभङ्गमकार्षुस्ते कारागारे निक्षिप्ताः ।

इदानीमनेकशो गान्धीमहाशयः कारागारमगमत् । बहुधा तत्र कठोरं परिश्रममकार्षीत् । कारागारे सम्प्राप्तं शिरस्त्राणं यदयं सर्वदा पर्यदधात् तद् देशीयजनानामिच्छया स्वतन्त्रतायाः सङ्केतमभूत् । सम्मानजनकं जीवनं यापयितुं तस्यावश्यकताऽनुभूता । गान्धीमहाशयस्य शिरस्त्राणानुरूपमेव तत् चित्रितमभूदिह । पश्चात् तत् भारतस्य स्वातन्त्र्ययुद्धे 'गान्धीटोपी' नाम्ना प्रथितम् । १९०९ तमस्य ख्रिष्टाब्दस्य जूनमासे कमपि नियोगमासाद्य गान्धीमहाशयः इङ्लैण्डदेश-मगच्छत् । भारतीयानां साहाय्यस्य सम्प्राप्त्या विना परावर्तत ।

पोतस्य फलके 'हिन्दस्वराज' नामकं प्रसिद्धं पुस्तकं गुर्जरभाषायामयमलिखत् । पुस्तकेऽस्मिन् निखिला धार्मिका राजनैतिकाश्चास्य विचाराः सविस्तरमुपवर्णिताः ।

गान्धीमहाशय उपादिशत् विद्वेषस्य स्थाने प्रेमाचारं हिंसायाः स्थाने आत्मोत्सर्गं शारीरिकस्य सामर्थ्यस्य स्थाने चात्मबलम् । निखिलाश्चैते सिद्धान्ताः दक्षिण-अफ्रीकादेशे तस्य परीक्षिता आसन् ।

१६१३ तमस्य ख्रिष्टाब्दस्य मार्चमासेऽन्तरीपस्य सर्वोच्चन्यायालयः हिन्दुमुस्लिमपारसीकप्रभृतीनां सर्वेषां विवाह-नियमं व्यलोपयत् । तत्रत्यः प्रशासकोऽप्येतमन्वमोदत । एतस्य विरोधे गान्धीमहाशयः सत्याग्रहमाचरितुं निर्णीतवान् । सत्याग्रहे सत्यमाग्रहश्चेति पदद्वयमस्ति । अत इदमवश्यं करणीयमिति दृढं वक्तुं भयरहितेन भाव्यमिति अभिप्राय-कमासीत् । ट्रान्सबालनगरे शान्त्या यात्रां प्रदर्शयन् नियमस्य भङ्गः करणीय इति गान्धीमहाशयस्य योजना आसीत् । यतो हि भारतीयाः प्रमाणपत्रमन्तरा स्थातुमनधिकृता अतोऽवश्यं निगृहीताः भवेयुरिति चिन्तितम् । तदेव समपद्यत यदनेन विचारितम् ।

सा महती शान्तियात्रा अक्टूबरमासस्याष्टाविंशति-तमायां तिथावारब्धा । गान्धीमहाशयोऽस्य नेतृत्वमकरोत् । पञ्चशताधिकद्विसहस्रसंख्यकैः स्त्रीपुरुषबालैश्चायमनुगतोऽभूत् । एतेषां सविधे परिधृतवस्त्रतोऽधिकं केवलमेकं कम्बल-मासीत् । शान्तिसैन्यजातमेतत् स्वकीयमात्मसम्मानं संरक्षितुं समागतेऽवसरे तदर्थं क्लेशं च सोढुं न्यूकैसलनामकस्थाना-दारभ्य षट्त्रिंशदर्धक्रोशपरिमाणं यावत् ट्रान्सबालनगरावधि यात्रामकरोत् ।

एतद्धि विस्मयकरमदृष्टपूर्वं च दृश्यमभूत् । सहानुभूतिः संरक्षणं च सम्पूर्णादेव विश्वतः समागतम् । एतेषां क्रमबद्धानुशिष्टा च पदयात्रा कोटिजनानां हृदयेषु प्रतिध्वनिताऽभूत् ।

चत्वारि दिनानि यावत् ट्रान्सवालनगरे ते पदयात्रिणः प्रदक्षिणामकुर्वन् । चतुर्थे दिवसे ते निगृहीताः धूम्रयानेन दूरं नीताश्च । प्रथमं गान्धीमहाशयो निगृहीतः, मासत्रयं यावत् कारागृहेऽवस्थातुं दण्डचतयाज्ञापितश्च ।

अन्ये नेतारः महत्यस्मिन्ननुष्ठाने भागं ग्रहीतुं भारतदेशादागताः । गान्धीमहाशयो मोचितः सन्नेतेषां स्वागतमकार्षीत् ।

प्रशासक इदानीं समाधानमन्वेषयन्नासीत् । भारतीयविरोधिबहुलानां जनानां काचिन्निर्णायिका समितिरेतदर्थं नियुक्ता परं भारतीयैः सा वहिष्कृता । तथापि तया समित्या भारतीयानां विजयमानुकूल्यमभीष्टं च सर्वं तत्कालादेवानुशंसितम् ।

मुख्यं युद्धं जित्वाऽधुना गान्धीमहाशयः स्वकीयं गृहं गन्तुमुद्यतः समजायत ।

भारते महत्परिवर्तनं सञ्जातम् । सर्वैरैक्यं विधेयमिति बद्धमूला धारणा वृद्धिं गता ।

एकता चेयं भारतीयराष्ट्रिय (कांग्रेस) संस्थाया जन्मना प्रारब्धा । १८८५ तमे ख्रिष्टाब्दे अलान अक्टोवन ह्यूम

नामा कश्चनाङ्ग्लजातीयः भारतीयं नेतृवर्गमन्यांश्च सह-चिन्तकान् एकत्राहूय भारतस्याभ्युदयायानुष्ठेयमित्यचिन्तयत् । एतं चरितार्थयितुं संस्थायाः प्रयोजनमासीत् । यस्यामेते सम्मिलिताः सन्तः परस्परं विचारविनिमयं कुर्युरिति । सत्यपि विविधविधे कार्यकलापे लघुतमेन मार्गेणास्या अपि सञ्चालनमभूत् । तत्र संयुक्तमनुष्ठानमनुष्ठितम् ।

बम्बईमहानगर्यां गोकुलदासतेजपालसंस्कृतपाठशालायाः सभाभवने भारतीयराष्ट्रिय( कांग्रेस )संस्थायाः प्रथम-मधिवेशनं १८८५ तमे ख्रिष्टाब्दे दिसम्बरमासस्याष्टा-दश्यां तिथौ समजायत । भारतस्य प्रत्येकं धर्माणां प्रति-निधयो द्विसप्ततिमिताः सदस्याः अंग्रेजजातीया अपि तत्र समुपस्थिता अभवन् । बङ्गदेशादागतः उमेश चन्द्र बनर्जीनामा प्रसिद्धतमो नेता तत्राध्यक्ष आसीत् । दिनत्रयं यावदधिवेशनं सञ्जातम्, ह्यूमहाशयाय हर्षध्वनिभिः महामहिमशालिन्याः सम्राज्ञ्याः वारत्रयावधिकैः जयकारैश्च तत्समापितम् ।

अधिवेशनं जनतायां महतीं रुचिमुदबोधयत् । प्रथमं (कांग्रेस) संस्था वादप्रतिवादपरिषदोऽधिकमहत्त्वशालिनी नासीत् । ब्रिटिशशासकद्वारेण भारतस्याभ्युन्नतिर्विधेयेति तस्यास्तदानीं प्रयोजनमासीत् ।

अस्याः (कांग्रेस) संस्थायाः प्रारम्भिकेऽधिवेशने ब्रिटिश महाराजानां संघध्वजस्य (union Jack) च चित्राणि प्राधान्येन प्रदर्शितान्यभूवन् ।

पश्चात् गान्धीमहाशयस्य प्रेरणाप्रदे नेतृत्वे सा (कांग्रेस) संस्था भारतस्य स्वतन्त्रतायाः समर्थिकाऽभूत्। इयं संस्था प्रत्येकजातेः पुरुषवर्गं नारीनिचयं चाकृष्टवती। उदन्ताश्चास्याः सुदूरतमेषु ग्रामेष्वपि कर्णगोचरतामगच्छन्। संस्था चेयमिदानीं भारतीयेतिहासस्य धारामेव दिगन्तरे पर्यवर्तयत्।

१९१४ तमे ख्रिष्टाब्दे जुलाईमासस्याष्टादश्यां तिथौ यदा गान्धीमहाशयो दक्षिण-अफ्रीकादेशं व्यसृजत्, तदाऽश्रूणि मुञ्चद्भ्यः सहस्रमितेभ्यो भारतीयेभ्यः सौहार्दपूर्णं सौप्रस्थानिकमभिनन्दनमलभत। देशेऽस्मिन्नदृष्टपूर्वमेवंविधमासीत् सौप्रस्थानिकम्।

नायं साक्षाद गृहं प्रत्यगमत्। अपि तु कानिचन दिनानि इङ्लैण्डदेशेऽवस्थित्य भारतं परावर्तत।

बम्बईमहानगर्यामितस्य सम्मानाय बहूनि स्वागतायोजनानि समपद्यन्त। येषामेकतमे जिन्नामहोदयोऽस्य स्वागतं व्याहरत् प्रत्यनन्दयच्च श्रेष्ठतमया प्रशस्त्याऽमुम्।

अनेकान् मासान् गान्धीमहाशयः भारतं पर्यभ्रमीत्। अस्मिन् पर्यटनक्रमे तीर्थस्थानानि पुरोहिताः व्यापारिणः भिक्षुका विविधविधा अन्ये मानवाश्च सम्मिलिताः। अयं सर्वदा निर्धनानां काठिन्यं विभक्तुं तेषां तथाविधानां कष्टं सहानुभवितुं तृतीयश्रेण्यां प्रर्यभ्रमीत्।

पश्चादयं कैश्चिदनुगामिभिः सहाश्रमेऽवस्थातुं निर्णीय समास्थापयदाश्रमम् अहमदावादनगरस्यान्तिके कोचबरनामिकायां ग्रामटिकायाम्। १९१५ तमे ख्रिष्टाब्दे मईमासस्य पञ्चदश्यां तिथौ निर्माणमस्याश्रमस्यारब्धम्। वर्षानन्तरमाश्रमोऽयं साबरमतीनद्यास्तटे अहमदावादनगरतोऽविदूर एव स्थानान्तरितोऽभूत्।

सर्वे चाश्रमवासिनः सत्यपरायणा अहिंसका निर्भीकाश्च सन्तः मर्यादां (आत्मनियन्त्रणं) दृढं प्रतिपालयितुं बद्धपरिकरा आसन्। तत्र प्रतिवेशिभिरर्पितमेव यत्किमपि गृहीत्वा तत्परिसर एव कर्तव्यमनुतिष्ठतां नैसर्गिकं जीवनं यापनीयमासीत्।

पञ्चविंशतिमिताः स्त्रियः पुरुषाश्च तत्राश्रम एककुटुम्बतया न्यवसन्।

अस्मिन्नेवाश्रमे 'चरखा'पदप्रथितेन तन्तुवायचक्रेण गान्धीमहाशयः प्रथमतः परिचितोऽभूत्। १९१५ तमे ख्रिष्टाब्दे यदाऽयं दक्षिण-अफ्रीकादेशाद् भारतमागच्छत् तदा यथार्थतस्तन्तुवायचक्रं नानेन दृष्टमासीत् इति स्वयमयमलिखत्। इदानीं गुर्जरप्रान्तीयविधवायाः सुहृदः साहाय्येनायं तन्तुवायचक्रं समुपलब्धुं समर्थोऽभूत्। 'खादी' कथमुत्पाद्येति महतौत्सुक्येनाध्यगच्छदयम्।

पश्चात् सहानुगामिभिरयं सर्वदा निजनिर्मिततन्तुजातानां वस्त्रमेव पर्यदधात्।

व्यतीतेषु कषुचिन्मासेषु गान्धीमहाशयस्तत्राश्रमे नीचास्पृश्यजातावुत्पन्नं दुदाभाईनामा दानीबेननाम्नी तयोश्चाल्पवयस्का दुहिता लक्ष्मीरिति व्यक्तित्रयं सह न्यवासयत् ।

एतद्धि तदनुष्ठानं तद्ग्रामवासिनो नैष्ठिकान् हिन्दूजनानुद्विग्नानकरोत् अकोपयच्च । एते हि भोजनस्य द्रविणादेश्च दानं न्यवर्तयन् । एवं सत्यपि गान्धीमहाशयस्तानस्पृश्यान् आश्रमादपसारयितुं नोद्यत आसीत् । असङ्गताचरणापेक्षया आश्रमस्यैव पिधानं वरमित्येतदर्थमयं प्रस्तुतोऽभूत् ।

फलतः सञ्जाते धनाभावे गान्धीमहाशय आश्रमं विहाय प्रस्थातुमियेष । तत्कालमेव कश्चन धनी भद्रपुरुषः—यमयं प्रयत्नेनाज्ञासीत्—यानादाश्रममागत्य त्रयोदशसहस्रमितानि रूप्यकाणि गान्धीमहोदयाय संप्रादात् । आश्रमस्तेन संरक्षितोऽभूत् ।

गान्धीमहोदयः जनतया सार्द्धं समवर्द्धयदात्मपरिचयम् । बहुधा स्वामिभिर्दुर्व्यवहृताः कर्मशालायाः श्रमिकाः कृषिकर्मकराश्चैतमभ्यर्थयन्नुपकर्तुम् । सत्यनिष्ठतायाः प्रयोजनं तत्त्वार्थं युद्धचतां बलवर्धनं चायं दृढं प्रतिपादितवान् ।

आहूतः सन्नयं बिहारप्रान्तस्य चम्पारण्यमण्डलमगच्छत् । मण्डलं तं विहायान्यत्र गन्तुमादिष्टोऽपि प्रत्यषिध्यत्

तं राजकीयमादेशम् । दण्डविचाराय दण्डाधिकारिणः समक्षमयं पश्चादानीतः ।

दण्डाधिकारिणां कक्षः जनसङ्कुल आसीत् । किन्तु प्रशासकोऽस्याभियोगवादं नोपस्थापयामास । यद्यपि गान्धीमहाशय आत्मापराधं स्वीकृतवान् । तथाप्यभियोगवादः कालान्तरे विचाराय स्थगितः पश्चात् स्वतो निराकृतोऽभूत् । राजनियुक्ता विषयावबोधिनी परिषत् श्रमिकाणां पक्षं गृहीतवती । एवमपरं युद्धं जितमनेन ।

यथाशक्ति सर्वानुपकर्तुं सर्वत्रायं प्रावर्तयदव्याहतं गमनम् । किन्तु नायमधिकमात्मानं विनियोजितवान् शरीरकष्टेन बाधितोऽभूत् ।

एकदाऽयं संग्रहणीरोगेण पीडितोऽभूत् । यदाऽयं गुर्जरप्रान्तस्य नडियाद नगरं सम्प्राप्नोत् तदा ज्वरेणातिबाधितः महत्कष्टमन्वभवत् । वर्धमानमस्वास्थ्यममुं शय्यायामपातयत् । पठितुमसमर्थः कष्टेन वक्तुमप्ययं नाशक्नोत् । न किमप्यभक्षयत् न चौषधमग्रहीत् । गोदुग्धग्रहणमपि प्रत्यषेधयत् । गोभिः सह दुर्व्यवहारो भवतीति कृत्वा गोदुग्धं न ग्राह्यमिति शपथोऽनेन कतिपयवर्षपूर्वं गृहीतः । तं परितोऽवस्थिताः सर्वे दशामस्य वीक्ष्य चिन्ताकुला आसन् ।

अकस्मात् कस्तूरबादेव्या मनसि भावनैका स्फुरिता—गोदुग्धस्याग्रहणाय गान्धीमहोदयस्य शपथो वर्तते ।

अतोऽयमजाया दुग्धं ग्रहीतुमर्हति । किञ्चिद्विचारानन्तरं गान्धीमहाशय अजादुग्धमग्रहीत् । तद्दुग्धं सामर्थ्यमाधातुमुपाकरोदमुं पूर्ववत् स्वास्थ्यस्य लाभं चाकारयत् । तस्मादेव दिनादस्य भोजनांशतां गतमजादुग्धम् ।

यस्मिन् समये स्वास्थ्यमयं लभमान आसीत् तदानीमेव 'रौलेट नियमः' स्वीकृतोऽभूत् । वैयक्तिकस्य स्वातन्त्र्यस्य प्रतिरोधः न्यायालयस्यादेशमन्तराऽपि कस्यचित् कारागारे सम्प्रेषणादिश्च कठोरतमो नियमस्य मानदण्डोऽनुशंसितस्तत्र । कथमेतस्य विरोधे प्रतिकर्तव्यमिति विचारविनिमयार्थमेवं दुर्बलोऽप्ययं तदानीं मद्रपुरीमगच्छत् ।

राजगोपालाचारीमहोदयस्य गृहे अमुमेव प्रसङ्गं चिन्तयन् रात्रावेकस्यां स्वप्नावस्थायां सार्वजनिकमसहयोगान्दोलनमयं पर्यकल्पयत् । सत्याग्रह आत्मशुद्धिमपेक्षते स्म । अयमब्रवीत्—सप्ताहे एकवारं उपोषणस्य प्रार्थनायाश्च दिनं मत्वा सर्वो हि निजनियोगतो विरमत्विति ।

असहयोगान्दोलनं १९१९ तमे ख्रिष्टाब्दे अप्रैलमासे प्रचलितं महत् साफल्यमवाप्नोत् । केषुचित् स्थानेषु हिंसाऽपि सञ्जाता बहवश्च हिंसिताः । किन्तु गान्धीमहाशयो देशे शान्तिं स्थापयितुं जनतामभ्यर्थयत् । परमेवं कर्तुमयं नानुमत आसीत् । अस्य सर्वे क्रियाकलापाः प्रतिरुद्धा अभूवन् ।

पञ्चनदप्रान्ते—यत्रास्य गमनं राजाज्ञया प्रतिरुद्धमासीत्-

महोपद्रव आपतितः । अमृतसरनगरे जालियाँवालाबागाभिधाने क्षेत्रे महती सभा समुद्घोषिता आसीत् ।

तत्रत्यः प्रधानप्रशासकः सभां तां प्रतिबन्धितामकरोत् । यदा तत्र जनता एकत्रिता अभूत् । तदा प्रशासकः भुशुण्डीधारिणां सैनिकानां यूथेन सह हठात् बहिर्द्वारि समुपस्थितः । पूर्वसूचनामन्तरा उपस्थितेस्त्रिशन्निमेषमध्ये रिक्तपाणेर्जनताया उपरि भुशुण्डीभिः प्रहारमारभत । दशपलानि यावत् तत्प्रहारः प्रचालितः ।

तत्र पलायितुं मार्ग एव नासीत् । परित्रातुं यतमाना बहवो जनाः कूपेऽपतन् किन्तु जले निमग्ना अभूवन् । द्विशताधिकमेकसहस्रं जना मृताः षट्शताधिकं सहस्रत्रयं जना आहताश्चाभूवन् ।

पञ्चनदप्रान्ते आतङ्कस्य राज्यं विरराज । जना अपमानजनकैर्व्यवहारैर्दमिताः कशाभिरभिहताश्चासन् । गान्धीमहाशयः ब्रिटिशशासकस्योपरि विश्वासं तत्याज ।

गान्धीमहोदयः स्वदेशवासिनः प्रत्यवोचत्—'वर्षाभ्यन्तरे स्वराजं (आत्मशासनं) लब्धुं शक्यते यदि प्रारब्धेऽस्मिन्नसहयोगान्दोलनस्य प्रत्येककार्यक्रमे हार्दिकं साहाय्यं ते कुर्युरिति' । असहयोगान्दोलनं यात्राप्रदर्शनं कार्यावरोधश्च तत्र कार्यक्रम आसीत् । एकोऽपि कार्यक्रमः हिंसात्मको नासीत् । आन्दोलनस्याभ्यन्तरे दृढमुत्साहो भरितः, वैधैरुपायैः स्वराजसिद्धेः परिकल्पनायां शान्तिमार्गोऽपि निवेशितः । अधिवक्तारः

स्वव्यवसायमत्यजन् पश्चायतं लघुविवादनिर्णायके न्यायलये परिणतम् ।

लिपिकानां राजकीयभृत्यानां निर्माणस्य शिल्पशाला इति गान्धीमहाशयेनाभिहिता विद्यालया महाविद्यालयाश्च स्वतन्त्रतायाः सङ्ग्रामे भागं ग्रहीतुकामैश्छात्रैः मरुभूमितां प्रापिताः । स्वदेशीयं वस्त्रं खद्दरनाम्ना प्रसिद्धं गान्धीशिरस्त्राणं च स्वतन्त्रतायाः सैन्यस्य कवचतया परिणतमभवत् ।

भारतस्य मुक्तेश्चिह्नं तन्तुवायपचक्रम् 'चरखा' अभवत् । वर्षस्य केषुचिन्मासेषु कार्यतो विरतानां कृषकाणां कृते निर्मितं तन्तुवायचक्रं निर्धनानामतिरिक्तस्यायस्य स्रोतः समजायत । देशान्तरादायातेषु वस्त्रेष्वाश्रितं भारतं तन्तुवायचक्रमकरोत् स्वावलम्बि ।

गान्धीमहाशयस्य प्रतिभा जनतासु स्वाभिप्रायस्य प्रतिपादनक्षमतामुपार्जयत् । निरक्षराणां सहस्रजनानां मध्ये सुबोधया भाषया परिचितदृष्टान्तान् पुरस्कृत्य प्रतिपाद्यमुपास्थापयदयम् । तेषां पुष्कलस्य साहाय्यस्यार्जने कारणमेतदेवाभूत् ।

कथं यन्त्रनिर्मितं विदेशीयं वस्त्रं भारतीयस्य गृहोद्योगस्य विध्वंसमकार्षीदिति प्रदर्शयितुमयं बम्बईमहानगर्यां विशालमुत्सवाग्निं प्रज्वालयामास । प्रदर्शनमेतद्द्रष्टुं सहस्रं जनाः समागताः । यथा यथाऽस्य ज्वालः सम्पूर्णं पुञ्जमासाद्य ऊर्ध्वमुखोऽवर्द्धत तथा तथा महान् हर्षध्वनिर्गुञ्जितोऽभूत् ।

कार्यमिदं स्वदेशीयवस्त्रविषये किमपि भवितुं नार्हतीति जनसाधारणस्य धारणां दूरीचकार इति गान्धीमहोदयोऽवोचत्। अस्यानुष्ठानस्य संस्मारणे समालिखदयं—विदेशीयस्य वस्त्रस्य परिधानं पापमिति विदेशीयं वस्त्रं ज्वालयित्वा अस्मदादयः कलङ्कमग्निसात् कुर्वन्ति।

केवलेन कौपीनेनावृतः गान्धीमहाशयो भारतीयस्य साधारणजनस्य कृषकस्य च प्रतिनिधित्वमकार्षीत्। अयमेव सम्पूर्णस्य भारतस्य वाणी बभूव। प्रथमत एव भारतीया जनता राजनीतौ रुचिं ग्रहीतुं प्रारभत।

स्वदेशीयमान्दोलनं महत् साफल्यमवाप्नोत्। गान्धी-महाशयः प्रतिदिनं तन्तुवायचक्रं प्राचालयत्। तथाकर्तुमपर-मप्युपादिशत्।

त्वरितमेव विंशतिलक्षमितानि तन्तुवायचक्राणि भारत-स्य ग्रामेषु गुञ्जितुमारभन्त। तन्तुवायचक्रं 'चरखा' इति नाम्ना प्रसिद्धं वस्त्रमधिकृत्य राष्ट्रस्यात्मनिर्भरतायाश्चिह्न-रूपेण परिणतमभूत्।

सविनयावज्ञान्दोलनं निरन्तरं प्रचलितमासीत्। यत इदं हिंसायामपि परिणतमतः गान्धीमहाशय एतदपनेतु-मुपादिशत्।

यथाकथञ्चित् १९२२ तमस्य ख्रिष्टाब्दस्य मार्चमासे 'यङ्ग इण्डिया' नाम्न्यां पत्रिकायां समालोचनात्मकस्य

निबन्धस्य लेखनेनायं निगृहीतः साबरमतीकारागारमानीतश्च । अहमदाबादनगरेऽभियोगपरीक्षणमारब्धम् ।

यथाऽयं दुर्बलः शान्तश्च कौपीनं दधत् न्यायालयं प्राविशत् तथा विश्रुतस्यास्य सम्मानाय प्रत्येकं जना उदतिष्ठन् । प्रचलितमभियोगपरीक्षणम् । वर्तमानायां शासनप्रणाल्यां गान्धीमहाशयः दोषमारोपयत् । एतां शासनप्रणालीमयं पापाचार इति प्रत्यपादयत् । एतस्या विरोधे जनतामुपादिशमहमिति स्वयमङ्गीचकार । किन्त्वस्य शास्त्रमहिंसा आसीत् । षड्वर्षाणि यावत् कारागृहे स्थातुमयं दण्डचतयाज्ञापितः ।

अयमभियोगवादो विश्वस्मिन्नपि विश्वे महतीं रुचिमुदबोधयत् । न पुनः कदाप्येतं विरोद्धुं ब्रिटिशशासनं स्फुटं प्रायतत ।

कारागार एवात्मकथामयं स्वयमलिखत् । यत् पुस्तकमिदानीं श्रेष्ठतमेषु ग्रन्थेषु परिगण्यते । एतद्धि सम्पूर्णं निगृहीतावस्थायां लिखितम् । कारागारे पुष्कलं समयमध्येतुमलभत । अतः सम्पूर्णस्य तस्य सफलतयोपयोगमकरोत् ।

१९२४ तमस्य खिष्टाब्दस्यारम्भे गुरुतरया रुजाऽयमाक्रान्तोऽभवत् । उदरपीडया ज्वरेण च बाधमान आसीत् । पूनानगरस्य चिकित्सालये संप्रेषितः । उण्डुकपुच्छशोथस्य शल्योपचारेण परिशोधनमपेक्षितमभूत् । शल्यक्रियावसरे विद्युत्प्रकाशः विफलोऽभवत् । शल्यचिकित्सकाः प्रदीपप्रकाशे

स्वनियोगमनुष्ठितवन्तः। १६२४ तमस्य खिृष्टाब्दस्य मार्च-मासे गान्धीमहोदयः मुक्तोऽभूत्।

बम्बईमहानगर्याः समीपे जुहूनामके समुद्रतटे स्वल्पे हर्म्ये निवासितः। यदाऽयं स्वास्थ्यं लभमान एव आसीत्, तदा देशस्य बहुषु भागेषु उपद्रवः सञ्जातः।

यद्यप्ययमेवंविध एवासीत् दुर्बलस्तथापि सितम्बर मासस्याष्टादश्यां तिथौ एकविंशतिदिनानामुपोषणमारब्धुं समकल्पयत्। एतद्धि तदीयैर्जनैर्विहितस्य पापस्य प्रायश्चित्त-स्वरूपमासीत्।

गान्धीमहोदयः रचनात्मकं कार्यं प्रारब्धुमुद्यतोऽभूत् किन्तु प्रशासकस्य कृत्यानि बाधामकार्षुः। अयमुपादिशत् जनतां परस्परमुपकर्तुं प्रैरयच्च।

१६३० तमे खिृष्टाब्दे लवणकरस्य प्रतिरोधविषयेऽयं राजप्रतिनिधिं न्यवेदयत्। यतः सर्वेषां भोजनेषु लवणस्या-वश्यमपेक्षाऽसीत्। अतस्तत्करस्य गुरुतरो भारः निर्धनानामुपरि निपततिस्म। यदि लवण करो निरस्तो भवेत् दरिद्रतमोऽपि यथेच्छमुपलब्धुमर्हेत्।

प्रशासकस्तथाकर्तुं प्रत्यषेधयत्। अतः गान्धीमहाशयः नियमभङ्गं प्राकट्येनोदघोषयत्।

अस्मादाश्रमतः शतक्रोशमिते दूरे समुद्रस्य तीरेऽवस्थितं

दण्डीग्राममयमचिनोत्। तत्र लवणकरनियमस्य भङ्गं कर्तु-मैच्छत्। मार्चमासस्य द्वादश्यां तिथौ सार्धषड्वादनसमये प्रातरयं तत्र प्रस्थातुकामः स्मितमाकृतौ निश्चयं सौम्यचक्षुषोः वशंवदं कार्यकर्तृसमुदायं च पृष्ठतः कृत्वा समुद्यतोऽभूत्।

एतेन सहैकोनाशीतिमिता अनुगामिन उदतिष्ठन्। लवणकरस्य निवृत्तिं विना न परावर्तनमिति दृढमेकस्वरेण प्रतिश्रुतवन्तस्ते। अनन्तरं तैः प्रारब्धा यात्रा।

भारते सर्वत्र सुदूरक्षेत्रेष्वपि व्यापकरूपेण अस्या यात्रायाः समाचारः प्रासरत्। सहस्रं जना द्रष्टुं तत्रागताः। परं तेऽपि पृथिव्याः कस्याश्चिदपि शक्तेर्नैव बिभ्यतः निर्भीक-स्यास्य नेतुः संवर्द्धनार्थमागच्छन्। समागतेषु शतानि तदनुष्ठाने भागमगृह्णन्।

जवाहरलालनेहरूमहाशयस्तत्र यदा सम्मिलितस्तदानीन्तनं दृश्यमेवमवर्णयत्—'अहमपश्यं गान्धीमहाशयमात्मनो वंशवदैः सहकारिभिः सहावस्थितमनुगामिनामग्रेसरं शान्तं दृढपदं निर्भीकं च'। हृदयस्पृक् दृश्यमेतदासीत्।

चतुर्विंशतिदिनानन्तरं यात्रिणः दण्डीग्रामस्य तत्समुद्रतटं सम्प्राप्नुवनन्। सा चाप्रैलमासस्य पञ्चमी तिथिरासीत्। तस्यां रात्रौ ते प्रार्थनामुपोषणं चाकुर्वन्। प्रभाते सर्वे समुद्रस्नानमकार्षुः। सार्धाष्टवादनसमये गान्धीमहाशयः नम्रीभूय लवणखण्ड मेकं गृहीतवान्। साधारणया क्रिययाऽनया

भङ्गमकरोन्नियमस्य । उपस्थिता जनाः हर्षध्वनिमकुर्वन् । सहयोगिनश्चानन्देन पुलकिता आसन् ।

सरोजिनी नायडूमहाशया आनन्दविह्वला सती उच्चैरवोचत्—'उद्धारकेभ्यो नमो नमः' इति ।

सङ्केतस्यास्यैव प्रतीक्षायामवस्थिते भारतेऽधुना सर्वत्र ग्रामेषु नगरेषु च पुरुषाः स्त्रियश्च लवणं निर्माय करमन्तरा विक्रेतुं प्रारभन्त । मईमासस्य चतुर्थ्यां तिथौ प्रशासकः गान्धीमहाशयं निगृह्य पूनानगरस्यान्तिके यर्वदाकारागृहे न्यक्षिपत् ।

गान्धीमहाशयः 'दरशाना'स्थानान्दोलनस्य कृते आत्मानं नियोक्तुमैच्छत् । इदानीं श्रीमती नायडू महाशया योजनां कार्यान्वितामकरोत् । अस्या नेतृत्वे पञ्चशताधिकद्विसहस्रं स्वयंसेवका दरशानास्थितं लवणभाण्डागारमाक्रामन् । लवणभाण्डजातं शूलाग्रैः लौहसूत्रैः गर्तैश्च मण्डलीकृतमासीत् । चतुःशतमारक्षिणः सततं यष्टिहस्ताः पञ्चविंशतिमितास्ते भुशुण्डीं गृहीत्वा तत्र संरक्षणे तत्परा आसन् ।

सत्याग्रहिणः सदस्या लौहसूत्रावेष्टनतः किञ्चिद्दूर एव स्थिताः । यूथ एक अधिगर्तं लौहपरिधेरभिमुखमग्रेसरो बभूव । आरक्षिणः सत्याग्रहिणामुपरि यष्टिप्रहारमकुर्वन् तेषां शिरांसि लौहबिद्धाग्रैर्लगुडैरुदपाटयन् ।

कश्चिदपि यूथेष्वेकस्त्राणार्थमात्मनः बाहुमपि नोदस्थापयत् । ते हि दुर्विषहाभिर्वेदनाभिः परिस्पन्दमाना अचेतना भग्नशिरस्काश्छिन्नबाहवश्च श्वेतं वस्त्रं रक्तरञ्जितं विदधतः भूमाववस्कन्दिता अतिष्ठन् । सत्याग्रहिणः नैव कदाप्येतस्मादबिभ्यन् । संमर्दितेऽपि प्रथमे यूथेऽपरो यूथ अग्रेसरो बभूव । तत्र यद्यपि संघर्षः नासीत् तथापि विरोधस्य प्रतीकारस्य च प्रदर्शनमभवत् । सत्याग्रहिण अग्रतो गच्छन्तः आघातैः पतित्वा व्यरमन् ।

ब्रिटिशशासकस्य नृशंसमेतदाचरणं सम्पूर्णं देशमेव तस्य विरोधे पर्यवर्तयत् । सत्याग्रहिणां शौर्यमयस्याहिंसात्मकस्य च व्यवहारस्य दृश्यं सफलमकरोत् तदीयमुद्देश्यम् । यदर्थमेते प्रतिनिधित्वं व्यदधुस्तेषां नृशंसं दमनं मौनमवलम्ब्य विना प्रतिवादेनासहन्त । नैजं सम्मानं प्रशंसां च समुपार्जयन् ।

सर्वत्र स्वातन्त्र्यमुत्साहेन जेतुं कृतसङ्कल्पानां नायकजनानां निर्भीकस्य साहसस्य शान्तस्य च प्रमाणमुपलब्धमासीत् ।

शताब्दीतो गृहे एकान्तमवस्थितो महिलावर्ग इदानीं बहिरागत्य स्वकीयस्योद्देश्यस्य सिद्धये भुजाभुजि युद्धं प्रावर्तयत् । तत् समयादेव भारतीया भारते सर्वथा ब्रिटिशशासनं सोढुं नाशक्नुवन् ।

गान्धीमहाशयो लवणसत्याग्रहस्य नेतृत्वमकरोन्निगृहीतश्च । एतस्य प्रतिवादे, सम्पूर्णे भारते पूर्णतः कर्मावरोधः

सञ्जातः । यद्यपि केषुचिन्नगरेषु हिंस्र उपद्रव उदपद्यत तथापि सविनयावज्ञान्दोलनं प्रायः शान्तिपूर्णमासीत् ।

बम्बईमहानगरे शासनद्वयमिवालक्ष्यत । यूरोपदेशीया भारतीयसैनिकाश्च ब्रिटिशशासनं प्रति निष्ठावन्त आसन् । अवशिष्टास्तु सर्वं एव काङ्ग्रेसदलमन्वगच्छन् । तदानीं कर्मावरोधस्तु प्रतिसप्ताहमनुष्ठीयते स्म ।

सूचनाप्राप्त्यनन्तरमेव नगराणां सर्वं आपणाः पिहिता अभूवन् । राजमार्गाः सहस्रैः स्त्रीपुरुषैः सङ्कुलिता अवर्तन्त । पूर्णरूपेण नीरवताऽराजत । तदानीं कस्याप्यान्दोलनस्य कृते काङ्ग्रेसदलस्यानुमतिरवश्यमपेक्षितासीत् । शुक्लवस्त्रधारिणो जना राष्ट्रियगीतानि गायन्तो ब्रिटिशशासनस्य सामूहिकरूपेण विरोधमकुर्वन् । सर्वे जनाः स्वदेशनिर्मितानि खादीवस्त्राण्येवाधारयन् ।

भारतीयनां कृते ब्रिटिशशासनमसह्यं सञ्जातम् । राजप्रतिनिधिः लॉर्ड इर्विनमहाशयो गान्धीमहानुभावेन साकं विवादसमाधनार्थं वार्तालपामैच्छत् । अत एव स जनवरीमासस्य पञ्चविंश्यां तिथौ गान्धी महाशयमन्यांश्च काङ्ग्रेसकार्यकारिणीसमितेः सदस्यान् निर्बन्धेन विनैव कारागारान् मोक्तुमादिशत्, यथा ते परस्परं मिलित्वा सविस्तरं विचारं कर्तुं शक्नुयुः । १९३१ तमे ख्रिष्टाब्दे जनवरीमासस्य षड्त्रिंश्यां तिथौ गान्धीमहाभागोऽन्ये च नेतारो मोचिताः । तथाप्यविरतं दमनं वीक्ष्य गान्धीमहाभागो राजप्रतिनिधिना सह सविश्रम्भं वार्तालापमकुरुत ।

फरवरीमासस्य षष्ठ्यां तिथौ प्रयागाधिवेशने काङ्ग्रेस-नेतारः सन्धिकरणमुचितमिति निश्चयमुद्घोषितवन्तः। गान्धीमहाशयं काङ्ग्रेसदलस्य प्रतिनिधिरूपेण संवादं प्रापयितु-मधिकृतवन्तश्च।

तत्र केचन जनाः प्रयासस्यैतस्य विरोधमकुर्वन्। चर्चिलमहाशयैरभिहितम्—'अयं मिडिलटैम्पुलसंबद्धो राज-द्रोही चाधिवक्ता गान्धी साम्प्रतं प्राच्यदेशेषु सुविदितानां भिक्षूणां वेशमाधाय सविनयावज्ञान्दोलनेन युद्धाह्वानं सङ्घट-यति सञ्चालयति च। सोऽर्धनग्न एव राजप्रतिनिधिप्रासादस्य सोपानमार्गमारुह्य सम्राट्प्रतिनिधिना सह समानता-माश्रित्य परिसंवादं करोतीति दृष्ट्वा महती शङ्का जुगुप्सा च जायते।'

फरवरीमासस्य सप्तदश्यां तिथौ प्रारब्धेयं वार्ताऽन्ततो-ऽनुबन्धे परिणता। एतदनुबन्धपत्रं मार्चमासस्य पञ्चम्यां तिथौ दिल्लीमहानगर्यां हस्ताक्षरितमभूत्। तच्च'गान्धीइर्विनसन्धि'-नाम्ना प्रसिद्धम्। यद्यपि वार्तालापसमये सर्व एव सौहार्दपूर्णा मृदुभाषिणश्चासन्। तथाप्याधिकारिकाः कौटिल्यं समाचरन्। अतस्त्वरितमेव गम्भीरं वैमत्यं समुत्पन्नम्। शास्त्रिमहाभागः-सप्रूमहाशयो जयकरमहोदयोऽन्ये चोदारदलावलम्बिनो नेतारो माध्यस्थ्यमाचर्य पक्षावुभौ प्रार्थयामासुराग्रहं विहाया-न्योन्यं सम्यगवबोद्धुं प्रयतनीयमिति। ततो गान्धीमहाभागः सविनयावज्ञान्दोलनाद्विरन्तुं निरचैषीत्।

सन्धावेते विषयाः स्वीकृताः—आन्दोलनं विरमतु। संघशासनं दायित्वं समन्वयं समुचितरक्षाश्चाधारीकृत्य भारतीयसंविधानस्य प्रारूपमारचयितुं नियोजितायाः वृत्त-मञ्चपरिषदः सर्वासु वार्तासु काङ्ग्रेसदलं सम्मिलितं भवतु। देशस्य विविधेषु भागेषु दण्डाधिकारिभिः कृतानामत्या-चाराणां मूलानुसन्धानविषये मा भूदाग्रह इति।

राजप्रतिनिधिस्त्वित्थं प्रतिश्रुतवान् युगपदेव सविनया-वज्ञान्दोलने निगृहीता नेतारो मुक्ताः स्युः, राजापहृता भूमि-सम्पत्तिश्च प्रतिदास्यते, आपत्कालीना अध्यादेशाः परावर्ति-ष्यन्ते। निःशुल्कं लवणनिर्माणं मद्यस्याहिफेनस्य विदेशीय-वस्त्रजातस्य चापणानां शान्तिपूर्णोऽवरोधोऽनुज्ञास्यत इति। तत्रान्तिमस्तु विषयः स्ववदेशीयान्दोलनस्य प्रोत्साहनार्थमभि-प्रेत आसीत्।

१९३१ तमख्रिष्टाब्दस्यागस्तमासस्य सप्तविंशे दिने गान्धीमहोदयः पण्डितमालवीयमहाभागः श्रीमती नायडू-महाभागा च वृत्तमञ्चपरिषदि भागं ग्रहीतुं लण्डननगरीं प्रति जलधिमार्गेण प्रस्थिताः। भारतस्य भविष्यनिर्मितये समुप-युक्तां परिकल्पनामारचयितुं सम्मेलनमेतदायोजितमभूत्। भारतीयराजकुलानां मोहमदीयानां सिक्खधर्मावलम्बिनां ख्रिष्टधर्मावलम्बिनां पारसीकानामन्येषाञ्च वर्गाणां प्रति-निधयस्तत्रोपस्थिता अभूवन्।

तत्र तदीयसचिवौ महादेवदेसाई-प्यारेलालौ पुत्रः देवदासः

मीराबेनमहाशया अपि समुपस्थिता अभूवन्। मित्राणां हितैषिणाञ्च साधुवादसंवादैरयमाप्लावितोऽभूत्। स्वाभाविकचर्यानुसारमनेनाधिपोतमपि तन्तुवापः कृतः पुस्तकान्यधीतानि पत्राणि च लिखितानि। पोतस्य पृष्ठभूमिषु परिभ्रमितञ्च। यतोऽयं बालकानस्निह्यत् अत एवैतस्य मैत्री शीघ्रमेव यूरोपदेशोद्भवैर्बालकैर्बालिकाभिश्च साकं सञ्जाता। सर्वेषु पत्तनेषु जना गान्धीमहोदयस्य स्वागतं व्याहरन्तः शुभञ्च तदीयमैच्छन्।

परिषदि गतेष्वपि बहुषु श्रान्तिमयेषु सप्ताहेषु न काऽपि कार्यसिद्धिरभूत्। गान्धीमहोदयो दासतां पूर्णस्वातन्त्र्ये विपरिणमयितुमैच्छत्। किन्तु वृत्तमञ्चपरिषदि उपन्यस्ताः-सर्वेऽपि प्रस्तावास्तस्यास्वीकृता अभूवन्।

एतत् सर्वं संक्षिप्य गान्धीमहोदयोऽब्रवीत्—'अहं स्यां स्वगृहस्वामीति भवन्तः कथयन्ति, किन्तु तस्य कुञ्चिकां स्वयं सह संरक्षन्ति। दौवारिकमपि द्वारे कञ्चित् नियोजयन्ति' इति।

वृत्तमञ्चपरिषदि सर्वेषां सम्मततया निर्णीतम्-विविधधर्मावलम्बिनां भूस्वामिनां व्यापारिणामन्येषाञ्च स्थानानि विधानपरिषदि आरक्षणीयानीति।

सदस्याश्च केवलं स्वजातीयजनसमूहैरेव निर्वाचिता भवेयुरिति।

गान्धीमहोदयस्तु विषादमन्वभूत्—यत एतादृशे विभाजने स्वीकृतेऽपि वस्तुतः राष्ट्रियस्य शासनस्य स्थापना दुःशका एव स्यात्। गान्धीमहोदयस्य सर्वातिशायि साफल्यं तु वृत्तमञ्चपरिषदो बहिरेव समदृश्यत। अयमात्मानं निर्धनममनुत, तथैव च जीवनमयापयत्। अतोऽयं लण्डननगरस्य East End पूर्वस्मिन् भागे निर्धनैरधिष्ठिते 'किङ्सलीहौल' इत्याख्ये स्थाने न्यवसत्। तत्र कुमारिम्यूरियललेस्टरमहाशयाया अयमातिथ्यं स्वीकृतवान्। वृत्तमञ्चपरिषदः स्थानं सन्तजेम्सप्रासाद आसीत्। स तु गान्धीमहोदयस्य निवासस्थानात् दूरेऽवर्तत। तत्र गमनेऽसौकर्यमनुभवन्नप्ययं निर्धनैर्लण्डननगरनिवासिभिः सार्धमेव वसतिमवृणोत्।

सप्ताहान्ते लङ्काशायरक्षेत्रे व्यतीतं दिनद्वयं गान्धीमहोदयाय सर्वाधिकमरोचत। भारते विदेशीयवस्त्राणां बहिष्कारात् बहवस्तत्रस्त्रा वस्त्रनिर्माणशालास्वनुजीविनो निराजीवाः सञ्जाताः। गान्धीमहाशयो भारतीयानां निर्धनत्वं कष्टानि च तेषां पुरतो वर्णयमास। ते अस्याभिप्रायमभ्युपगम्य वशंवदाः सञ्जाताः।

तत्र गान्धीमहोदयो बहुषु जनसमूहेषु भाषणमकरोत् अनेकेषां जिज्ञासूनां सन्तोषमभिलापेनोदपादयत्। अयं राज्ञा लोर्डजौर्जमहाशयेन चार्लिचैपलिनमहाभागेन बर्नार्डशौमहोदयेन सरसैमुलहोरमहाभागेनान्यैश्च भद्रजनैः सह सङ्गतिमकरोत्।

इङ्लैण्डदेशे निवासकालेऽपि स्वकीयामुषोभ्रमणचर्यां

नैवाजहात्। सत्यपि प्रवृद्धतमे शीते गान्धीमहोदयः केवलं-कम्बलमेव पर्यदधात्। पादपरिधानीयमन्तरा केवलं साधारणोमुपानहं व्यवहृतवान् प्रावारमपि नाधारयत्। यद्यपि समालोचकैरयम् "अर्धनग्नभिक्षु" शब्देन बहुधा समुपन्यस्त स्तथापि तादृश एव भिक्षुरिङ्लैण्डदेशस्य राजदम्पतीभ्यां सत्कृतः।

इङ्लैण्डदेशे शिशुभिः साकं समागमो गान्धीमहोदय-मधिकमसुखयत्। अमुष्य सौजन्येन दयालुतया चाकृष्टास्ते शिशवोऽस्मै प्रीणयन्ति स्म। अस्य जन्मदिनोत्सवे, भारतस्य निर्धनशिशूनां कृते तैः प्रीतिकराण्युपायनानि समुपहृतानि। इङ्लैण्डदेशे समुपलब्धेषु वस्तुषु तान्युपायनान्येव गान्धीमहाभागेन बहु मानितानि। लण्डननगरतः प्रस्थानकाले केवलं क्रीडनकान्येव तेन सहानीतानि। तत्रत्यानां सर्वेषां जनानां कृतज्ञताज्ञापनमयमकरोत्। 'सर्वमेतदातिथ्यं सौजन्यञ्च हृदये संस्थापयामि ? चेत् पीडामपि भवद्भिरलभिष्ये नैतद् व्यस्मरिष्यम्। सर्वं सहिष्ये या काचिद् विपदापततु मम दुःखमयदेशस्य कृते'।

स्वदेशाय प्रस्थितो गान्धीमहाशयो मध्येमार्गं यात्रार्तो व्यरमत्। आत्मनश्चिरमित्रस्य फ्रान्सदेशोद्भवस्य प्रसिद्धलेखकस्य रोमाँ रौलैण्डमहाशयस्य Lake Geneva लेकजेनेवानगर-स्थिते विनोदभवने आतिथ्यमगृह्णात्।

रोमाँरौलैण्डमहाशयोऽस्माकं संस्कृतीनां साहित्यानां

दर्शनानां च नितरां प्रशंसक आसीत् । विशेषतश्चेहत्या भक्तरामकृष्णपरमहंसविवेकानन्दप्रभृतयस्तत्सदृशाश्च तस्मै अरोचन्त । उभे च मित्रे बहुषु विषयेषु विचाराणां विनिमयमकुरुताम् । भारतस्य स्वातन्त्र्यविषयेऽपि ताभ्यां विमृष्टम् । गान्धीमहोदयेन कानिचन दिनानि यथासुखं तत्र व्यतीतानि । रौलैण्डमहोदयेन विरचितो गान्धीमहाभागस्य जीवनचरितग्रन्थो विख्यातोऽस्ति ।

स्वदेशं गन्तुकामोऽयं रोमदेशस्य प्रसिद्धं 'सिस्टाइन चैपल' नामकं ख्रिष्टधर्ममन्दिरं द्रष्टुमगच्छत् । यदासौ तत्र कीलविद्धस्य ईसाभिधस्य प्रतिमायाः सम्मुखोऽभवत् तदास्य नेत्रे अश्रुपूर्णे सञ्जाते ।

१९३१ तमे ख्रिष्टाब्दे दिसम्बरमासस्याष्टाविंशे दिने बम्बईमहानगरेऽयमवातरत् । तद्दिनावसाने आजाद मैदानभूमावधिकतमायां सङ्ख्यायां श्रोतुं समागतायां जनतायामयमभाषत । अयं लण्डननगरादाहृतं संवादं तासां समक्षं सविस्तरमवोचत् । किमर्थमयं तत्र विफलतां गत इत्यपि सविशदं न्यरूपयत् । अयमब्रवीत्—'शासनस्य सहयोगं कर्तुं मार्गमार्गणं सम्भवेदिति चिन्तितं मया । अधुनापि मार्गमन्वेष्टुं यथाशक्ति प्रयतनीयमिति' किन्तु राजप्रतिनिधिः विलिङ्गडनमहोदयो नैवात्र रुचिं प्रादर्शयत् । निषेधाज्ञा उद्घोषिता आसन् । अत एव सहस्रादधिका जना निगृहीताः ।

काङ्ग्रेसदलं सविनयावज्ञान्दोलनं पुनरारब्धुं राष्ट्रमेवामन्त्रितवान् ।

१९३२ तमे खिष्टाब्दे जनवरीमासस्य चतुर्थे दिने बम्बई-महानगरे गान्धीमहोदयो निगृहीतोऽभूत् । तस्मिन् दिने तस्य मौनव्रतमासीत् । अत इङ्लैण्डदेशेऽवस्थितेषु तुल्याजीवेषु च पत्रद्वारेण संवादमिमं प्रैषयत् ।

आन्दोलनेऽतिशयिते सति शासकः सर्वत्रातङ्कमतनुत । काङ्ग्रेसदलं तत्सम्बन्धिन्यश्चान्याः संस्था अवैधा उद्घोषिताः । तासां सम्पत्तयः शासकेनापहृताः । काङ्ग्रेसजनानान्निग्रहोऽभूत् । तेषां सम्पत्तयो निवसितीर्मुद्रणयन्त्रालयाश्च बलात् स्वायत्तीकृता जनयात्राश्च निषिद्धाः ।

विन्स्टन चर्चिलमहोदयस्य मतेन 'शासकस्येमे प्रतीकाराः सैन्यविद्रोहानन्तरमपेक्षातोऽधिकमुग्रतरा अभवन्' ।

ईदृश्यां विषमपरिस्थितावपि सविनयावज्ञान्दोलनं सततमाचर्यमाणमासीत् । गुर्जरदेशे संयुक्तप्रान्ते च राजस्वार्पणमवरुद्धम् । जना अधिवनं विहितान् नियमान्, अधिलवणमेकाधिपत्यं चोदलङ्घयन् । विदेशीयवस्त्राणां बहिष्कारः प्रागारब्ध एवासीत् ।

अवैधासु सभासु जनयात्रासु च लगुडप्रहारा अजायन्त । राजद्रोहमयेषु स्थानेषु दण्डाधिकारिणः शासनं संरक्षितुं पर्यभ्रमन् । विपुला अर्थदण्डा आरोपिताः । केवलं जनवरीमासे १५,००० सङ्ख्यका जना निगृहीताः । वर्षान्ते पुनः ६७००० मिता लोकाः कारागारमगच्छन् ।

जवाहरलालनेहरूमहाशयः पूर्वमेव कारागृहे बद्ध आसीत् । माता कस्तूरबामहाभागापि तत्र तमन्वव्रजत् । गान्धीमहाशयः कारावाससमये यथापूर्वं शुभकार्यं प्रारब्धुं प्रायतत । अयमस्पृश्यानां समस्यामुदस्थापयत् । सम्मार्जकाः मलावहाश्चर्मकारास्तथान्ये दुःखभाजो हिन्दूसमाजेषु जुगुप्सिता आसन् । गान्धीमहोदयस्तेभ्यो 'हरिजन' इति सञ्ज्ञामदात् । 'हरेरीश्वरस्य जन' इति हरिजनपदस्यार्थस्तदभिप्रेत आसीत् । पश्चात् तस्मिन् संवत्सरेऽसौ स्वसम्पादितस्य साप्ताहिकसमाचारपत्रस्य 'हरिजन' इति सञ्ज्ञामकरोत् । नितरां तिरस्कृता जना ईश्वरस्याधिक्येनानुग्रहभाजना भवन्तीति गान्धीमहोदयोऽगादीत् । लोकसभायाः प्रातिनिध्ये, हरिजनं हिन्दूतो विभिद्य तज्जातीयस्य पार्थक्येनात्मप्रतिनिधिं निर्वाचयितुं शासकेनाधिकारः प्रदत्तः । स च गान्धीमहोदयं सर्वतोऽधिकमचिन्तयत् । एवं सतीमे हिन्दूसमाजतः पृथक् संस्थिताः स्युः । समाजः कदापि तान् न परिग्रहीष्यतीति चिन्ता गान्धीमहाशयमबाधत ।

एतस्य विरोधे हेतुमुपन्यस्तुं गान्धीमहोदयः सर सैमुलहोर महाशयमलिखत् । किन्तु अस्य ध्यानाकर्षणविरुतिर्बधिरस्य कर्णयेः पतिता । शासकस्तु आत्मनिर्णयमुदघोषयत् ।

१९३२ तमे खिष्टाब्दे सेप्टेम्बरमासस्य विंशतितमे दिने, एतस्य प्रतिवादे, गान्धीमहाशय आमरणमनशनं प्रारभत । कस्तूरबामहाभागा च तेन सहावस्थातुं यर्वदां प्रति प्रस्थापिता ।

तृतीयेऽह्नि तस्य चिन्ताजनिका स्थितिरभूत्। विविध-जातीयानां नेतारो हरिजननेता अम्बेदकरमहाशयश्चैकत्रा-वस्थाय निर्णयं नीतवन्तः। गान्धीमहोदयस्तं निर्णयं स्वीकृत-वान्। पश्चात् प्रसिद्धा यर्वदासन्धिर्हस्ताक्षरिताऽभवत्। शासकः परावन्धममनुत। गान्धीमहाशयश्चानशनव्रतं बभञ्ज। तदाप्रभृति न कश्चिदपि जन्मनः कारणेनास्पृश्य-तया हिन्दूसमाजे व्यवहृतः स्यादिति परिषदो निर्णयोऽजायत।

इङ्लैण्डदेशे, वृत्तमञ्चपरिषदि गान्धीमहाशयो हिन्दू-त्वस्यैक्यं स्थापयितुं यावच्छक्यं प्रायतत। आत्मानं समर्प-यितुमपि समुद्यतोऽभवत्। अयमुदघोषयत्—'न वयं कदापि भिन्नवर्गतयाऽस्पृश्यानां हिन्दूसमाजतो विभाजनमिच्छामः। सिक्खधर्मावलम्बिनः स्थिरस्थितौ यथावत् स्थातुमर्हन्ति। मोहमदीयधर्मावलम्बिनो यूरोपदेशवासिनश्च यथास्थिति तिष्ठन्तु। किमस्पृश्या अस्पृश्यतया निर्धारिताः स्थास्यन्ति ? अस्पृश्यतायामवस्थितितो वरं तादृशहिन्दूत्वस्य मरणमिति मम निर्णयः'।

मार्गोऽयं सुगमो नासीत्। गान्धीमहाशयो हरिजनैः सह सर्वांशतः साम्यं स्थापयितुं प्रारभत। किन्त्वात्मानुगामिना-मपि समर्थनं नालभत। गान्धीमहाशयस्त्वरितमेव प्रारब्धायां हरिजनाभिधायां साप्ताहिकपत्रिकायां सशक्तया भाषया

लिखितुं प्रारभत हरिजनसेवकसंघं समस्थापयच्च । इमे कार्ये पश्चात् नितरामुपयोगिनी सञ्जाते ।

केषुचिद् दिनेष्वयं दुःखमन्वभवत् । यतो ह्येतस्य कार्येषु जना औदासीन्यं प्रादर्शयन् । १९३३ तमे खिष्टाब्दे मईमासस्य सप्तमे दिने अयमसाधारणमनुभवमलभत । एकविंशति-दिनानामुपोषणव्रतमाचरितुं तं प्रेरयति कश्चित् ध्वनिरित्यनु-भवो मध्येनिशाऽकस्मादमुं जागरयति स्म । स च ध्वनिस्तद्व्रतं प्रातः कालादेवानुष्ठातुमादिशत् । असौ पुनः स्वपितुमगच्छत् । प्रातश्चात्मनोऽपरिहार्यं निश्चयमुपवासारम्भरूपं प्राकाशयत् ।

गान्धीमहोदयोऽनशनव्रतस्य प्रथम एव दिवसे मोचितो-ऽभूत् । अन्यथा कारागारे कदाचिदस्य मृत्युः स्यादिति सम्भा-वना शासकस्य सम्मुखमवर्तत ।

अनशनव्रतं चैतत् 'अव्याहता एकविंशतिदिनव्यापिनी प्रार्थना समजायत' । जातिबद्धान् हिन्दूसमाजान् मन्थयितुं धर्मस्य प्रतिक्रियां लज्जयितुमपाकर्तुंश्चानशनव्रतमिदं गान्धी-महोदयस्य साहाय्यमकरोत् ।

देशस्य स्वातन्त्र्यार्थं प्रयत्नशीलः गान्धीमहोदयोऽस्पृ-श्यानां कृते सङ्घटनमपि प्रारब्धवान् । गान्धीमहोदयो विदेशी-याधिपत्यादुपेक्षाया अत्याचाराच्च विमुक्तिं स्वतन्त्रतापदार्थ-तया स्वीकरोति स्म ।

भारतीयजनताया निर्विवादोऽयं नेता गान्धीमहाशयः सम्पूर्णस्य राष्ट्रस्यैव मनःकल्पितं परिगृहीतवान् । न कदापि पूर्वमेतादृशं बहुपक्षावलम्बिस्वभावशालि नेतृत्वमन्यस्मिन् सङ्गतमभूत् । लक्षाधिका निरक्षरा भारतीया गान्धीमहोदयं पर्यचिन्वन् ऐच्छँश्च तमनुव्रजितुं निर्विशङ्कम् ।

गान्धीमहाशयः साधारणः राजनीतिज्ञो नासीत् । अयं कदापि सभावक्तृत्वं नाटकीयालङ्क्रियां वा न व्यवहृतवान् । असौ श्रोतृवर्गेषु निश्छलैः शब्दैर्मधुरैर्ध्वनिभिः सङ्गतैश्च तर्कैर्विश्वासमुदपादयत् । स्वकीयेन विनीतार्जवेन कौशलेन च बहुधा जनवृन्दं समाकृष्टवान् ।

अयं समाजसुधारकस्य परिहासवेदिनः सच्चरित्रस्य राजनीतिविदश्च चरितान्यभिनीतवान् । अयं परिपक्वकूटनीत्या तथा प्रबोधं समघटयत् यथा ब्रिटिशदेशवासिनोऽपि विस्मिता अभूवन् ।

अयं यदाऽङ्गलभाषायां ब्रवीति लिखति वा अयत्नेन प्रवाहमयी सरलतमा चास्य भाषा सर्वैरेव परिज्ञाता बभूव । आङ्गलभाषाया विशेषज्ञतयाऽस्य परिगणनाऽजायत । अस्य सुलभा निर्भूषा च शैली बहुधा 'बाइबिल' नामकधर्मग्रन्थेन समतामुपैति स्म ।

अयमनेकश आत्मविश्वासं परीक्षितुं निजमनः-कल्पितं कार्यं परिणमयितुं सत्यस्य स्वीकारे सन्दिहानान् लज्जयितुं चात्मदमनात्मकमुपोषणमाचरितवान् ।

अयमन्वभवत्—'कृतेऽपि बहूपोषणे मानवहृदयं परिवर्तनमपेक्षत' इति । वर्धाश्रमे स्वास्थ्यलाभानन्तरं १९३३ तमे ख्रिष्टाब्दे नोवेम्बरमासस्य सप्तमे दिने देशे पर्यटितुं यात्रामारभत । अयं यत्र कुत्रचिदगच्छद् विशालायां जनसभायां भाषणमकरोत् । आसु सभासु कतिघटिका यावत् प्रतीक्षमाणा जनता समतिष्ठत । दशसु मासेषु भारतस्य प्रत्येकं ग्रामे नगरे चायं पर्यटनमकरोत् । ग्रामीणा नागरिकाश्च देशहिते नियोक्तुं तस्मै रूप्यकाण्यददन् । अयं तदानीमष्टलक्षमितानि रूप्यकाणि संगृहीतवान् । तत्रापि निर्धनकृषकैरेवाधिकं पणाः प्रदत्ताः । बहुधा नार्यः स्वकीयं वैयक्तिकं रत्नाभरणानि दत्तवत्यः ।

अयं हरिजनान् बन्धुतयाऽमन्त्रयत्,तादृशं गीतमगायच्च । भोज्येषु नैष्ठिका 'हिन्दवः' हरिजनैः साकमेकस्यां पङ्क्तौ समुपाविशन् । विद्यालया हरिजनानां शिक्षां निशुल्कं दातुमन्वमन्यन्त । मन्दिराणि विद्यालयाश्च तेषां कृत उन्मुक्ता बभूवुः । स्वच्छतराचरणेन वसितव्यमिति शिक्षा हरिजनेषु वितरणीया । अन्यथा ते समाजे न स्वीकृता भवेयुरिति गान्धिमहाशयोऽपि समन्वभवत् ।

अयं महता धैर्येण तान निवसितुं स्वास्थ्यकरमुपायम-शिक्षयत्। स्वयमयं प्रथमं शौचालयस्य परिष्कारं विधाय पश्चात् समुदघाटयत् मन्दिराणां द्वाराणि । बहुकाठिन्यं तस्य समाधातव्यमासीत्, बाधाश्च परितः स्थिता आसन् ।

यद्यपि हरिजननेतारोऽप्येतं सन्दिहाना आसन् । तथाप्ययं निर्विशङ्कं लक्ष्यं साधयन्नासीत् । सम्पूर्णे भारते नवीना चिन्तनपद्धतिः प्रसृमराऽभवत् ।

१९३४ तमखिस्त्रष्टाब्दस्य जनवरीमासे भयानकभूकम्पेन विहारप्रान्तः पीडितोऽभूत्। सहस्रशो जना निहता। ग्रामेष्वधिकं साहाय्यं पुनर्निर्माणकार्यं चापेक्षितमासीत् । तत्र गान्धीमहाशयो यदा विनाशलीलामद्राक्षीत्, तदान्वभवत् सर्वप्रकारकं परिवर्तनं भारतीयग्रामेषु केन्द्रयितव्यमिति ।

अक्टूबरमासेऽयं काङ्ग्रेसदलमजहात् । त्वरितमेवात्मानं ग्रामसुधारकार्येषु न्ययोजयत् । वर्धायामभिनव आश्रमस्तस्य स्थायिनिवासे परिणतः। तत्रायं विनोबाभावे महादेवदेसाई मीराबेन कस्तूरबा प्रभृतिभिः सह ग्रामोद्योगं प्रतिष्ठापयामास । राजमार्गाः संमार्जिता मलानि प्रक्षेप्तुं गर्ताश्च खनिता अनेन ।

एतस्यैव प्रवर्तनया १९३६ तमखिष्टाब्दस्य दिसम्बरमासे फैजपुरग्रामे काङ्ग्रेसदलस्याधिवेशनमायोजितमभूत् । जवाहर

लालनेहरूमहाभागस्तत्र काङ्ग्रेसदलस्याध्यक्षपदे निर्वाचितः । सर्वं चैतद् ग्रामस्य पुनर्निर्माणकार्याणां मार्गं प्रस्तरास्तणेन प्रशस्तमकरोत् ।

१९३७ तमख्रिष्टाब्दस्य निर्वाचने, काङ्ग्रेसदलं महाविजयमलभत.। सप्तसु प्रान्तेष्वस्य बहुमतमभूत् । पश्चादनेनैकादशप्रान्तेषु नव प्रान्ताः स्वायत्तीकृताः। तदानीं गान्धीमहाभागो बहूनि सुधारकार्याण्युपास्थापयत् । अयं विचारितवान्—'शिक्षायामधिकं महत्वमावश्यकत्वं च हस्तशिल्पस्य वर्तत इति' । वर्धाश्रमाधिष्ठितमखिलभारतीयशिक्षासम्मेलनाधिवेशनं तदीयविचारममनुत । तदा पुनरस्य स्वास्थ्यमपतत् । अयं विश्रमितुं बम्बईमहानगरमगच्छत् । तत्र 'जूहू' इत्याख्ये समुद्रतटे शिशुभिः साकं क्रीडाऽस्मै नितरामरोचत ।

अनन्तरमयं सीमान्तप्रान्ते पर्यभ्रमत् । तच्चामुमतितरां प्राहर्षयत् । सीमान्तगान्धीपदेन प्रसिद्धस्य गफ्फारखाँमहोदयस्य नेतृत्वे स्वाभिमानशीलास्तत्रत्या आदिवासिनः पूर्णामहिंसां स्वीकृतवन्तः । शान्तिसेनां च निर्मितवन्तः, यस्या 'रेडशर्टस' इति सञ्ज्ञाऽभवत् ।

यदा काङ्ग्रेसदलं गान्धीमहोदयस्य परामर्शं प्राप्तुं प्रारभत तदा सङ्घटनस्य नेतृत्वं पर्यवर्तत । अन्या घटना गान्धीमहोदयस्य ध्यानमाकृष्टवत्यः । राजकुलानां सदस्याः

स्वातन्त्र्यार्थं विवदमाना आसन् । राजकोटनगरं बाधास्थानेषु प्रधानतममासीत् । तत्रत्याः ठाकुरपरिवारा विविधराज्ञां-साहाय्यभाजनान्यभूवन् । सरदारवल्लभभाइपटेल-महोदयेन सार्धं ठाकुरपरिवाराणां पूर्वतनः पणबन्धो न स्वीकृतोऽभूत् । तत्र सविनयावज्ञान्दोलनं दमितमभूत् । अपर-प्रान्तवासिनस्तत्प्रान्तं प्रवेष्टुमनुमता नासन् ।

गान्धीमहोदयः स्वस्थो नासीत् । माता कस्तूरबामहाभागा स्वजन्मभूमौ राजकोटनगरे सङ्घटनकार्यमारब्धुं नियोजिताऽ-भूत् । मैवं कार्षीरित्युपदिश्य तां विरमयितुं प्रयासो विफलो बभूव । १९३९ तमख्रिष्टाब्दे फरवरीमासस्य तृतीये दिने सा तस्मिन् नगरे प्राविशन्निगृहीता चाभवत् । एतत्प्रतिफले बहवो विसंवादा अधिकतमाश्च निग्रहाः समजायन्त ।

गान्धीमहाशयः स्वकीयमस्वास्थ्यवृत्तान्तं गोपयित्वा राज-कोटनगरमगच्छत् । असौ विवादनिर्णयाय प्रयत्नमकरोत् । किन्तु ठाकुरपरिवारः स्वपक्षसमर्थनाय वज्रमिव दृढ आसीत् । पश्चात् मार्चमासस्य तृतीये दिनेऽयमामरणमुप-वासमारब्धुं निरणैषीत् । तन्मित्रेषु सहकर्मकारिषु प्रशंसकेषु च प्रवृद्धं मनस्तापमुदपादयदेतदुपोषणम् ।

मार्चमासस्य पञ्चम्यां तिथौ कस्तूरबामहाभागा तं द्रष्टुं समानीता । असौ तामपृच्छत् किं त्वया सह निगृहीता अन्या

नार्यः मुक्ता आहोस्विन्नेति । नेत्युत्तरं श्रुत्वा कस्तूरबामहाभागामपि तत्रैव प्रैषयत् । अयं जनसाधारणतो विलक्षणमुपचारं ग्रहीतुं तां न्यषेधयत् ।

तस्य स्थितिश्चिन्ताजनिका समजायत । अयमीषदपि जलं पातुमसमर्थ आसीत् । अवसानमासन्नमिवालक्ष्यत । राजप्रतिनिधिर्भारतस्य मुख्यतमं न्यायाधीशं सर मारिसगियरमहोदयं विवादं निराकर्तुं न्ययोजयत् । ठाकुरपरिवारस्तदीयं निर्णयममनुत । गान्धीमहोदयोऽप्युपवासभङ्गमकरोत् ।

ठाकुरपरिवारस्य न मान्यमभूत् प्रथमतो हस्ताक्षरितं सन्धिपत्रमिति वीक्ष्य सर मारिसगियरमहोदयोऽपरं सन्धिपत्रं हस्ताक्षरितमकारयत् ।

शासकः सन्धिपत्राभिहितनियमान् सर्वथा नैवापालयत्, गान्धिमहोदयस्य विरोध उपद्रवं समघटयच्च । एकस्यां प्रार्थनासभायामनेकशतानि प्रदर्शनकारिणः कृष्णपताकां प्रतिवातं नीयमानाः सभाभङ्गाय प्रायतन्त । ते सर्वे गान्धीमहोदयस्यान्तिकमागत्य तं परिवृत्य स्थिताः । अयं स्थाने स्थाने मित्रवर्गैः नियुक्तान् संरक्षकान् न्यवारयत् । अहमिहोपविशिष्यामि तेषां मध्ये एकाक्येव वा गमिष्यामीति दृढस्वरेणाब्रवीत् ।

यथायमुदस्थात् पृष्ठदेशेऽकस्मादेव भयानकपीडयाक्रान्तोऽभूत्। अयं किञ्चित्कालाय चक्षुषी न्यमीलयत् प्रार्थनया चारोग्यमयाचत। शीघ्रमेव तस्मिन् सामर्थ्यमन्तर्हितमभूत। अत एवायमुदमीलयत् चक्षुषी । 'तस्यैव सङ्घस्य दयोपरिमामवस्थापयतु' इत्यात्मीयानुपादिशत्।

अयं सङ्घस्य नेतारमाहूय भवतामधीनोऽहमिति न्यवेदयत्। हिममिव हिंसा द्रवतामुपगता । तत्सङ्घस्य नेता गान्धीमहोदयस्य गृहाभिमुखे मार्गे साहाय्यमाचरितुं प्रस्तुतोऽभूत्। य एतं हिंसितुमागच्छत्तस्यैव स्कन्धे हस्तंनिक्षिप्य तत्सायमसौ निखिलमपि गृहमार्गं पर्यभ्रमत्।

१९३९ तमख्रिष्टाब्दस्य सेप्टेम्बरमासे द्वितीयं विश्वयुद्धं प्रवृत्तम्। राष्ट्रनेतृभिः सह वार्तालापमन्तरेणैव राजप्रतिनिधिर्भारतीयान् तत्र भागं ग्रहीतुं न्ययोजयत् । यद्यपि 'जर्मनीदेशो गर्हणीय' इति काङ्ग्रेसदलमङ्गीचकार। तथापि निर्णयस्तु प्रथमं भारतीयजनैरेव नेतव्य आसीदिति तेषामभिप्राय आसीत् ।

स्वतन्त्रमेव भारतं स्वभागधेयं निर्णेतुमर्हतीति काङ्ग्रेसदलेन स्फुटं ज्ञापितमभूत् । यदि ब्रिटिशदेशवासिनो भारतस्य साहाय्यमिच्छन्ति तैर्यथार्थं स्वातन्त्र्यं दातुं भारताय प्रतिश्रोतव्यं स्यात्।

१९४० तमख्रिष्टाब्दस्यागस्तमासे राजप्रतिनिधिर्नवीनां राज्यनीतिं निर्मातुं भारतीयजना अधिकृता भवेयुरिति प्रत्यशृणोत् । परमिहैकः समयोऽपि तेन योजितः—राज्ञां मोहमदीयानां चानुमतिरपेक्षिता' इति । काङ्ग्रेसदलेनायं प्रस्तावः तिरस्कृतः ।

अक्टूबरमासे गान्धीमहोदयः सत्याग्रहं प्राचालयत् । प्रमुखनेतृणां निग्रहं वीक्ष्य बहवो जनास्तत्र भागं गृहीतवन्तः । सर्वैरेकस्वरेणोद्घोषितम्—'युद्धे धनेन जनेन वा ब्रिटिशशासनस्य साहाय्याचरणमनुचितमिति' । अहिंसात्मकेन प्रतिरोधेन सर्वविधं युद्धं प्रतिकर्तुं यतितव्यमित्युचितं भवेत् ।

कतिपयेष्वेव मासेषु विंशतिसहस्रं जना अपराधितयोद्घोषिताः, एकदा तु चतुर्दशसहस्रपरिमिता जनाः कारागार आसन् ।

जापानदेशवासिभिर्व्यापकतया प्रसारितं त्रासं वीक्ष्य ब्रिटेनदेशवासिनः सन्धिमकामयन्त । १९४२ तमख्रिष्टाब्दस्य मार्चमासे ब्रिटिशशासनमन्त्री सर स्टेफोर्ड क्रिप्समहोदयो भारतीयनेतृणां समक्षमपरेणैकेन प्रस्तावेन सह प्रेषितः । किन्तु तद् दौत्यं पूर्णतया विफलतां गतम् । गान्धीमहोदयोऽवदत्-'ब्रिटिशशासकेन भारताय वाचिकः सन्देशः समानीतः' । इयं जनश्रुतिः मया बहुधा श्रुता किन्तु सन्देशो न दृष्टः । असौ

मह्यमिदमदात् सङ्क्षेपतस्तदधीत्य च तमहमकथयम्—'किमर्थमागतोऽस्ति भवान् । यदीदमेव विद्यते किमस्ति भवतः प्रस्तोतव्यम् ? गृहं प्रति गन्तुं प्रथमगाम्येव वायुमानमाश्रयणीयं भवतेति भवन्तमहं परामृशामि' इति । क्रिप्समहोदयस्तु 'विचारयिष्याम्येतदि' ति प्रत्यवोचत् ।

अपरेऽपि नेतारो नैराश्यमन्वभूवन् । नवीना योजना नूतनं संविधानं तिरस्कर्तुं समभ्यकरोत् भारतीयं यत्किमपि राज्यं प्रान्तं वा । एतस्यैवार्थो भारतस्य निश्चितं विभाजनं भविष्यतीत्यासीत् । शासने भारतीयानां पूर्णाधिकारोऽपि नवयोजनया वञ्चितः ।

अस्मिन्नेव काले गान्धीमहोदयो "जहि भारतम्" इत्यान्दोलनप्रस्तावमुपस्थापयितुं निरचैषीत् । पश्चादयमगादीत्—'क्रिप्समहोदयस्य विलक्षणा विफलता मामिह प्रैरयत् । तदीयगमनकाल एव ममायं विचारोऽभूत् । क्रिप्समहाशयस्य विफलताया उत्तरमावश्यकमस्तीति प्रथममहमन्वभवम्' ।

१९४२ तमख्रिष्टाब्दे जुलाईमासस्य चतुर्दश्यां तिथौ काङ्ग्रेसदलस्य कार्यकारिणी समितिर्वर्धानगरे सम्मिलिताऽभूत् । सा च "जहि भारतम्" इत्यान्दोलनमसमर्थयत् । गान्धीमहोदयः स्वयमेतस्य प्रारूपमारचयत् ।

भारते ब्रिटिशशासनस्याविलम्बेन समाप्तिः प्रस्ताव-स्यास्य मुख्यमुद्देश्यमासीत् । अन्यथा—'स्वसङ्कल्पं प्रमाणयितुं १६२० तमख्रिष्टाब्दतः सञ्चितामहिंसात्मिकां शक्तिं काङ्ग्रेसदलमुपयोक्ष्यति' ।

अगस्तमासस्याष्टम्यां तिथौ अखिलभारतीयकाङ्ग्रेस-महासमितिः बम्बईमहानगरस्य गोवालियाटैङ्कस्थाने समायो-जिताऽभूत् । सा च "जहि भारतम्" इत्यान्दोलनप्रस्तावं पूर्णतः समर्थयामास । इयं च महासमितिर्विस्तीर्णया सम्भावितया चाहिंसात्मिकया रीत्या सामूहिकमुद्योगमारब्धुं जनतामाह्वयत् । अयं सामूहिकोद्योगो गान्धीमहोदयस्य नेतृत्वे समाचरणीय इत्यपि तत्र निर्णीतम् ।

गान्धीमहोदयः सभायामुपस्थितं जनवृन्दं सम्बोध्याब्रवीत् —'अहमस्मिन्नुद्योगे भवतां नेतृत्वभारं वहामि । किन्तु भवतां विनीतसेवकतयैवैतत् करोमि न तु सैनापत्येन शासकतया वेति विभावनीयम् । अथ च यः सर्वतोऽधिकां सेवां सुचारु विधास्यति स एव भवत्सु प्रधानः स्यात्' ।

भारतस्येतिहासे, युगसन्धेः सुमहानयं समय आसीत् । काङ्ग्रेसदलस्य सर्वे नेतारो गोवालियाटैङ्कस्थाने समायो-जितायां प्रसिद्धायां तस्यां सभायां समुपस्थिता आसन् । तत्रैवंविधा अपि केचन जना आसन्, ये पूर्वत एव काङ्ग्रेस-

दलतः पृथगभूवन् । किन्तु काङ्ग्रेसदलस्य समष्टिरेव योद्धुं जेतुं च स्वातन्त्र्यमिदानीं समुद्यतासीत् ।

विशालो जनसमूहः सभामण्डपतो बहिर्भागेषु सभां-परिवृत्य एकत्रित आसीत् । सर्वत्र उत्तेजना परिव्याप्ताऽभूत् तथापि राष्ट्रं महत्या सम्भावनया परिपूर्णमासीत् । जनसमूहो जयजयकारैर्नेतृवर्गानभ्यनन्दयत् । तदीयाह्वाने च सर्वः सर्वमाचरितुमप्युद्यतो बभूव ।

यद्यपीदानीं यावत् गान्धीमहाशय आन्दोलनमारब्धुं-जनतां नैवाह्वयत् । तथापि ब्रिटिशशासकस्तान् नेतृन् शान्तौ नैवाजहात् । शासकः कोपहेतुना विनैव जनसंघट्टं विघटयितुं तद्हृदयेषु च त्रासं समुत्पादयितुमश्रुवाष्पकोषान् विदीर्य जनसमूहे तान् प्रक्षेप्तुमाज्ञां प्रसारितवान् । पूर्वकथितोद्योग-स्यारम्भकाणां जनानां मध्ये कस्य कस्य कार्यकर्तुर्भाग्ये किं किं विहितमित्यपि सूचितवांश्च ।

अपरस्मिन् दिने प्रातरेव शासकः गान्धीमहाशयमन्यांश्च प्रसिद्धान् काङ्ग्रेससदस्यान् निगृहीतवान् । पूनानगरे आगाखाँ इत्याख्यस्य प्रासादे गान्धीमहाशयो नीतः । अत्रासौ वन्दीरूपेण वर्षद्वयमत्यवाहयत् । कस्तूरबामहाभागा च तेन सार्धमासीत् । देशप्रदेशेषु गान्धीमहोदयस्य निग्रहोदन्ते प्रसृते सति प्रजासु क्षोभोऽकस्मादुदपद्यत । आतङ्कवादिनोऽन्ये च

काङ्ग्रेसदलेनासम्बद्धास्तत्र सम्मिलिता अभूवन। किन्तु शासकस्तान् निष्ठुरेणोपघातेनोत्तरयति स्म। निरस्त्रोऽपि जनसमूहो निर्दयं ताडितः । सुषिरयन्त्रैरव्याहतं गुलिकाप्रक्षेपाः सञ्जाताः। राजपुरुषगृहीताश्च नृशंसतया कशाभिरभिहताः, भूम्यधः कुहरेषु चाभियोगं विनैव निक्षिप्ताश्च ।

शासकः सर्वेषामुपद्रवाणां हेतुतया गान्धीमहोदयं काङ्ग्रेसदलं चोपन्यस्य तेष्वेव सर्वं दोषमारोपयत् । एवं च नेतृणां निग्रहस्यौचित्यमबोधयत् । गान्धीमहोदयस्त्वेतां मिथ्यावार्तामधिकृत्य राजप्रतिनिधिसविधे पत्रमलिखत्। देशे शान्तिस्थापनायै सर्वेषां निगृहीतानां मुक्त्यर्थं च न्यवेदयत् । किन्तु राजप्रतिनिधिः पत्रस्योत्तरं नैवादात् ।

दिसम्बरमासे पुनरयं पत्रमलिखत्। यत्र—'सत्यमेवोक्तं भवतु, अन्यथाऽयं सत्याग्रहपद्धतिमुपयोजयितुं बाध्यो भवेदिति' समुपन्यस्तम् । इदम् 'उपोषणेन शरीरस्य दमनम्' आसीत् । 'नेच्छाम्यहमामरणमनशनमाचरितुम् । किन्तु यदीश्वरस्यानुकूल्यं भवेदुपवासस्य कठिनां परीक्षां परितर्तुमिच्छामि' इत्यकथयत्।

१९४३ तमे ख्रिष्टाब्दे फरवरीमासस्याष्टादशे दिने प्रातराशं कृत्वाऽयमेकविंशतिदिनानामुपोषणमारभत । उपोषणस्य सप्तमे दिने गान्धीमहोदयः शोचनीयां दशां

प्रपन्नः । अयं यथोचितं स्वपितुं नाशक्नोत् नितरामशक्तश्च सञ्जातः । दिनद्वयानन्तरं चिकित्साविशेषज्ञोऽप्यस्य जीविता-वसानविषये शङ्कितोऽभूत् ।

सम्पूर्णे भारत एतत्प्रतिवादा जनयात्राश्चाचरिताः । तस्य जीवातवे प्रार्थनाः समजायन्त ।

गान्धीमहोदयं प्रति शासकस्य व्यवहारमिमं वीक्ष्य तद्विरोध इङ्लिशदेशवासिनस्तत्रापि च प्रसिद्धाः पुरुषा असम्मतिं प्राकाशयन् । बर्नार्डशौमहाशयः राज्ञः मन्त्रिमण्डलं 'मानसिकं वैकल्यमिदम्' इति शब्देनानिन्दयत् । यद्यप्यधुनाऽपि चर्चिलमहोदयः प्रदर्शनकारिणां विरोधे दण्डाधिकारिणां क्रियाया औचित्यमनुमोदमान आसीत् ।

कार्यालयाभिलेखानुसारं दण्डाधिकारी ४७० सप्तत्य-धिकचतुश्शतवाराणि सेना च ६८ अष्टषष्टिवाराणि सुषिर-यन्त्राणि प्राचालयत् । १९४२ तमख्रिष्टाब्दस्य दिसम्बरमासं यावत् ६०,००० षष्टिसहस्रं भारतीया निगृहीता अभूवन् । ३९००० सहस्रमधिका निगृहीता भारतीया १९४३ तम-ख्रिष्टाब्दस्य फरबरीमासेऽपि कारागार आसन् । नैतच्चित्रम्, तदानीं गान्धीमहोदयो शासकस्याचरणं 'सैंही हिंसा' शब्देन वर्णयामास । सर्वेषां निर्वृत्तये गान्धीमहोदयः सङ्कल्पितं व्रतमपूरयत् । मार्चमासस्य तृतीये दिने कस्तूरबामहाभागा

उपवासभङ्गाय तस्य हस्ते नारङ्गरसपूर्णं पानपात्रं न्यदधात् ।

१९४३ तमख्रिष्टाब्दस्योत्तरार्धभागे बङ्गदेशे भयानको दुर्भिक्षः समजायत । पञ्चदशलक्षतोऽप्यधिका जनास्तस्मादेव हेतोर्मृत्युमुपगताः । गान्धीमहोदयो बुभुक्षितान् भोजनेन साहाय्यमाचरितुमैच्छत् । किन्तु तस्य प्रस्ताव अस्वीकृतोऽभूत् । अयं च बन्दीरूपेणैवावस्थितः ।

कारागारात्मके पूनानगरस्य निर्दिष्टे राजप्रासादे गान्धीमहोदयस्य सहगामिनी कस्तूरबामहाभागा मृत्युशय्यामुपागता । नोवेम्बरमासे वारद्वयं तस्या हृद्गतिरोधः समजायत । पश्चात् पुनस्तस्य रोगोऽवर्धत । किन्तु शासकस्तामुन्मोक्तुं नैच्छत् ।

१९४४ तमख्रिष्टाब्दे फरवरीमासस्य द्वाविंशतिदिने पञ्चसप्ततिवर्षदेशीया सा दिवमगच्छत् । एतादृशी गुणवती महिला षष्टिवर्षेभ्योऽप्यधिकमासीत् गान्धीमहोदयस्य समदुःखसुखा सहचरी । बन्दीगृहे तस्याः प्राणवियोगो देशमेव सम्पूर्णं गभीरे करुणासागरे प्राक्षिपत् । राजप्रासादस्य प्राङ्गणे समुपस्थितानि शतेभ्योऽप्यधिकानि मित्राणि दाहसंस्कारसमये तस्यै श्रद्धाञ्जलिं समर्पयामासुः ।

जनतायाः हृदयेषु कस्तूरबामहाभागां प्रति नितरां

श्रद्धाऽसीत् । अत एव तां प्रति श्रद्धायाः प्रतीकतया स्मारककोषं स्थापयामास । भारतस्य ग्रामेषु महिलावर्गस्य शिशुसङ्घस्य च कल्याणाय तत्कोषस्योपयोगो विधेय इति तदुद्देश्यमासीत् ।

अनन्तरं शीघ्रमेव, गान्धीमहोदयो रुग्णो बभूव । नूतनो राजप्रतिनिधिः लौर्डवेभेलमहाशयस्तं मईमासस्य षष्ठ्यां तिथावमुञ्चत् । स्वास्थ्यलाभाय विश्रामस्य किञ्चिद्दिनानन्तरमेव, अयं राजप्रतिनिधिना सह भारतब्रिटेनदेशयोः सम्बन्धमधिकृत्य वार्तालापं प्रारभत । तदायं साधारणं स्वीकरणीयं च मार्गमुद्भावयितुं एम० ए० जिन्नानामकेन नेत्रा मिलितः । राजगोपालाचारीमहाशय इहास्य साहाय्यमकरोत् । भारतवर्षमौत्सुक्येनैतस्य परिणामं प्रतीक्षते स्म । इहैव राष्ट्रस्य भविष्यं निहितमासीत् । वार्तालापः साफल्यमलभत ।

उभयोः दलप्रमुखयोर्मध्येऽनेके संवादाः समजायन्त । जिन्नामहोदयस्य नेतृत्वेऽधिष्ठितं मुस्लिमलीगदलं मोहमदीयानां कृते पाकिस्तानाभिधं पृथक् राज्यं भवितव्यमिति दृढमाग्रहं प्रारभत ।

१९४६ तमख्रिष्टाब्दस्य मार्चमासे, भारतस्य भविष्यनिर्णयावसरे साहाय्यमाचरितुं तदीयं संविधानमारचयितुं च

त्रयो मन्त्रिमण्डलसदस्याः ब्रिटिशशासकेनात्र प्रेषिताः। मध्यकालिकं शासनं सेप्टेम्बरमासे द्वितीयायां तिथावारचितमभूत्। जवाहरलालनेहरूमहाशयः प्रथमतः प्रधानमन्त्रिपदमलमकरोत्। प्रत्येकं परिस्थितौ गान्धीमहाशयस्य परामर्शः सुगृहीत आसीत्।

मुस्लिमलीगदलं स्वाधिकारं प्राकाशयत्—'केवलेन मोहमदीयेनैव एतत्पदाधिकारिणः मनोनीतं कर्तुमर्हा आसन्। अत एव जिन्नामहाशयो नैव सहयोगमकरोत्। मुस्लिमलीगदलमगस्तमासस्य षोडशं दिनं 'साक्षात् कर्मदिवसतयोपयोजयितुं कृतसङ्कल्पमासीत्। अपि च सितम्बरमासस्य द्वितीये दिने कृष्णध्वजमुद्धवितुमादिशत्।

अगस्तमासस्य षोडशे दिने कलकत्तानगरे विप्लवः समपद्यत। पञ्चसहस्रं जना निहताः। देशस्यान्यस्मिन्नपि भागे बाधा प्रसृमरा आसीत्। गान्धीमहाशयस्त्वरितमेव कलकत्तानगरमगच्छत्, शान्तिं स्थापयितुं च प्रायतत। यद्यपि यथाकथञ्चित् मुस्लिमलीगदलं शासने सम्मिलितमभूत्। तथापि मुस्लिमलीगदलस्य मन्त्रिमण्डलसदस्येन अब्दुररावनिस्तारमहाशयेन सह जवाहरलालनेहरूमहाशयस्तत्कालमेव जिज्ञासार्थं कलकत्तानगरमगच्छत्।

गान्धीमहाशयो यदा कलकत्तानगर आसीत्। वङ्गदेशस्य

नोग्राखालीक्षेत्रे तिपेराक्षेत्रे च हिन्दूजना निहन्यन्त इति वार्ता प्रसारिता । अत्याचारः ग्रामेष्वपि प्रसरेदिति चिन्ता तमधिकमबाधत । यदि द्वेषो ग्रामीणक्षेत्रेषु प्रविशेद् राष्ट्रस्यैव समाप्तिरापद्येत इति चिन्तयाऽसौ भीत ग्रासीत् ।

यद्यपि तस्य स्वास्थ्यं शिथिलमासीत् तथाप्यसौ नोग्राखालीक्षेत्रमगच्छत् ।

१९४६ तमख्रिष्टाब्दस्य नोवेम्बरमासतः १९४७ तमख्रिष्टाब्दस्य मार्चमासं यावत् पदातिरयमूनपञ्चाशद् ग्रामान् पर्यभ्रमीत् । बहुधाऽयं विनोपानद्भ्यां पर्यटति स्म । सञ्जातानां हिंस्रोपद्रवाणां प्रायश्चित्तार्थमियं तीर्थयात्रा तस्य कृते समपद्यत ।

यदा स विहारप्रान्त उपद्रवस्य वार्तामश्रृणोत् तदाऽसौ पीडितान् मोहमदीयान् उपकर्तुं तत्रागच्छत् ।

१९४५ तमे ख्रिष्टाब्दे ग्रगस्तमासस्य षष्ठ्यां तिथौ हिरोशिमानगरे एकस्याणुबम्बास्त्रस्य प्रक्षेपोऽजायत । तस्यैव मासस्य नवम्यां तिथौ रिपुणाऽपरं चैकं तन्नागासाकीनगरे प्रक्षिप्तम् ।

विस्तीर्णतमे नभसि ग्रणुबम्बास्त्रप्रक्षेपादावर्तको मेघग्राकाश ग्रनेकक्रोशोच्छ्रितश्शतक्रोशं यावत् प्रसरन् सन्दृश्यमान

आसीत् । उभौ च नगरौ सर्वथा विनाशमापन्नौ । जापान-देशवासिनो युद्धे आत्मसमर्पणमकुर्वन् ।

गान्धीमहाशयः स्वमतमुदघोषयत्—'केवलमहिंसैवैतस्य प्रतीकारतया विद्यमाना दृश्यते । इयमेवैतादृशी शक्तिर्या-मणुबम्बास्त्रं नाशयितुं न शक्कोति' ।

इहमिहावश्यमवधेयम् । विश्ववैज्ञानिकप्रमुखेष्वन्यतमो गान्धीमहाशयमेवं प्राशंसत्—'एतादृशोऽपि समय आग-मिष्यति, यदा अस्यामेव भूमावेतादृशः सुमहानात्मा अहिंसा-व्रती च व्यचरदिति कदाचिन् न विश्वसेत् वंशपरम्परा' इति ।

एशियादेशेष्वान्तरिकं सम्बन्धमधिकृत्य समायोजितायां सभायां भाषणाय गान्धीमहोदय आहूतः । इयं च सभा १९४७ तमख्रिष्टाब्दस्य मार्चमासे त्रयोविंशत्यां तिथौ समजायत । सर्वेभ्य एशियादेशेभ्यः सोवियतसङ्घस्य पञ्चभ्यो गणराज्येभ्यश्च समागताः प्रतिनिधयः सर्वेषु देशेषु घनिष्ठतमं सम्बन्धं स्थापयितुं चिन्तयामासुः ।

'देशस्य ७००००० सप्तलक्षमितेषु ग्रामेषु भारतस्य यथार्थं व्यक्तित्वं द्रष्टुं शक्नुवन्ति भवन्तः । पाश्चात्यदेशानुकारिषु नगरेषु नैतन्मिलितुमर्हतीति' गान्धीमहाशयस्तानब्रवीत् ।

विश्वस्य सर्वेषां धर्माणां संस्थापकाः जेससदेवोऽपि पूर्वस्मादेव दिशः समागमदिति तानयं स्मारयति स्म । अतस्तैः पूर्वस्यां-दिशि स्थितानां देशानां सन्देशानि पश्चिमायां दिशि स्थितेषु देशेषु प्रापयितव्यानि। ते स्वजनेषु पराक्रमस्य शिक्षाधानम-करोत् । पश्चिमायां दिश्यवस्थितान् देशान् प्रति दुरभि-सन्धिस्तैर्न कर्तव्या अपि तु स्ववैदुष्यं तेषु प्रापणीयम् ।

१९४७ तमख्रिष्टाब्दस्य मार्चमासे, लौर्डमाउण्टबेटन-महोदयो नवीनो राजप्रतिनिधिः समजायत । अयं राज्ञः पितृव्यपुत्रो विक्टोरियाभिधाया राजमहिष्याश्च प्रपौत्र आसीत् । नवदिल्लीनगरे राजप्रतिनिधिदम्पती नवीनां सद्यस्कां च चेतनामानीतवन्तौ । अहमिह भारते ब्रिटिशशासनं समापयितुं समागतोऽस्मीति लौर्डमाउण्टबेटनमहाशय उदघोषयत् । अयं गान्धीमहाशयं मिलितुमाह्वयत् ।

गान्धीमहोदयस्तदानीं विहारप्रान्त आसीत् । धूम्रयानेन तत्रापि यथारुचि तृतीयायां कक्षायां ततः प्रचलितः । यद्यप्यस्य कृते स्वातन्त्र्येण वायुयानस्यापि व्यवस्थाऽसीत् । उभौ च घटिकाद्वयमितं कालं वार्तालापमकुरुताम् । तत्क्षणा-देव उभयोर्गम्भीरा निर्व्याजा च मैत्री संस्मरणीया समजायत । द्वादशदिनेषु षट् वाराणि तौ सम्मिलितौ ।

लौर्डमाउण्डबेटनमहाशयो गान्धीमहोदयं सम्मानयति स्म ।

गान्धीमहोदयोऽपि तं विश्वसिति स्म । 'यद्यपि ब्रिटिश देशस्य साम्राज्यं प्रयाति तथापि भारतस्य साहाय्यमाचरितुं हृदयेन कामयते राजप्रतिनिधि'रिति गान्धीमहोदयोऽन्वभवत् ।

आत्मना पवित्रोऽपि गान्धीमहोदयः परिस्थितिवशान्नैव स्वातन्त्र्योत्सवमपश्यत् तत्सुखं वान्वभवत् ।

विरोधिनां तुष्टये देशस्य विभाजनमभवत् । गान्धी-महोदयो बहुभिर्नेतृभिः साकं वार्तालापमकरोत् किन्तु साफल्यं नालभत ।

प्रार्थनासभायामयमाख्यातवान्—"काङ्ग्रेसदलं पञ्चनद-प्रान्तस्य बङ्गप्रान्तस्य च विभागेन सह पृथक् पाकिस्तानदेशं स्वीचकार । अहं भारते विभाजनस्य विरोधं करोमि । ईश्वरं विहाय कोऽप्यत्र विषये आग्रहशीलो न भवेत् । द्वात्रिंशत्वर्षाणां सुकृतमद्यायशस्कर्यां परिणतौ पर्यवसितम् ।

अहमगस्तमासस्य पञ्चदशदिनोत्सवसमारोहे कथमपि न सम्मिलिष्यामि ।

घटीयन्त्रे द्वादशवादनावसरे मध्ये निशा सर्वेभ्यो दिनेभ्यो विलक्षणमेव प्रभातमभूत् । इदमेव प्रभातं १९४७ तमख्रिष्टा-ब्दस्यागस्तमासस्य पञ्चदशतमा तिथिरासीत् । १९० नवत्यधिकशतवर्षानन्तरं भारतं ब्रिटिशशासनतो

विनिर्मुक्तमत एव स्वतन्त्रं सञ्जातम् । महति संसदभवनकक्षे लौर्डमाउण्डवेटनमहाशयो भारतस्य स्वातन्त्र्यमुदघोषयद् राजकीयं प्रतिवेदनमपठच्च। जनता हर्षनादैस्तत्कक्षमपूरयत्। तोपपदप्रसिद्धास्त्राणां प्रतिक्षेपाः चर्चस्थानानां घण्टा-शिञ्जितानि धूम्रयानननिनादाश्च वातावरणमेव प्रमोदमय उल्लासे पर्पपूरयन् ।

'विश्वं स्वपिति किन्तु नवीनं जीवनमासाद्य भारतं जागर्तीति' प्रधानमन्त्री जवाहरलालनेहरूमहाशय आकाश-वाणीतः प्रावोचत् । भाषाणावसरे अयमवोचत्—'चिर-प्रतीक्षितं सुदिनमद्य समागतम् । इदं सौभाग्येन निर्धारितं दिनं वयं प्राप्ताः स्मः । भारतमद्य कठिनोद्यमस्यानन्तरं चिर-निद्रायाश्चः पुनर्जागृतं सचेतनं मुक्तं स्वतन्त्रं च विद्यते । विश्वस्य कृते एशियादेशस्य कृते विशेषतो भारतेऽस्माकं कृते सौभाग्यस्यैतत् क्षणं विद्यते ।

यद्यपि दुर्दिनमस्माकं रविप्रकाश आच्छन्न एव विद्यते । बहवोऽस्माकं जना मनोदुःखैः पीडिताः सन्ति । बहुसमस्या-भिश्च वयं परिवृताः स्मस्तथापि स्वातन्त्र्यस्यानन्दमनु-भवामः ।

'अस्मिन् शुभक्षणे वयं सर्वप्रथमं गान्धीमहाशयं स्मरामः । अयं खलु स्वातन्त्र्यस्य दृढतमः शिल्पकारः । अत एव

बापू राष्ट्रस्य जनको भारतस्य पुरातनव्यक्तित्वमूर्तिः । अयमेव तमसाच्छन्नानस्मानूर्ध्वंत अधोमुखीभिः ज्योतिर्भिः प्राकाशयत्' ।

'अनन्तरं वयमज्ञातचरान् स्वातन्त्र्यार्थं स्वयं रागतः प्रवृत्तान् स्वयंसेवकान् सैनिकांश्च स्मरामः । इमे खलु महात्मानो विना प्रशंसापुरस्काराभ्यामामरणं भारतमसेवन्त । राष्ट्रेषु विश्वस्य जनेषु चैतस्य शुभावसरस्य सौहार्दमभिव्यक्तयामः' ।

'भविष्यस्य शान्तये शुभाय च प्रजातन्त्रस्य स्वातन्त्र्यस्य च कृते तेभ्यस्साहाय्यस्यादानप्रदानेऽधिवच्मः' ।

'प्राचीनकालादेव समागतां सनातनीं नित्यनूतनां चास्माकं मातृभूमिं भारतवर्षाख्यां प्रति सादरं श्रद्धाञ्जलिं समर्पयामः । अथ चाद्यप्रभृति तदीयसेवायामात्मानं सम्बध्नामः' ।

विना गुलिकाप्रक्षेपेण कोटिसंख्याका भारतीया अद्भुत स्वातन्त्र्यजयोत्सवमनुष्ठितवन्तः । सम्पूर्णे देशे दिव्यज्योतिदर्शनमुल्लासव्यञ्जिकाऽलङ्कृतिसज्जा शोभायात्रा सैनिकप्रणतिर्नृत्यानि गीतानि च यथायथमनुष्ठितानि । सहस्राधिकानां राष्ट्रध्वजानां धवनोत्सवोऽनुष्ठितः ।

दिल्लीनगर्यां रक्तदुर्गमूर्ध्नि यथाक्रमं केसरसितहरित-वर्णानां ध्वजा स्वाभिमानपूर्वकमुद्धूता ।

इममुत्सवं द्रष्टुं देशस्य विविधप्रान्तेभ्यो दिल्लीनगर्यां जनता समागता । बहवो जनाः स्वतन्त्रस्य भारतस्य ध्वजं प्रणमितुं तद्दुर्गस्याग्रतः संस्थिता आसन् । तद्रक्तदुर्गं पुनरेकवारं सजीवस्येतिहासस्य केन्द्रविन्दुरभूत्

भारतीया जनता दुःखं विस्मृतवती । ब्रिटिशशासकं प्रति तदीयहृदये द्वेषलेशोऽपि स्थानं नालभत । लौर्डमाउण्ट-बेटनमहाशयस्तदीयहृदयानि विजितवान् । अत एव जनता 'जयतु माउण्टबेटनः' इति हर्षध्वनिमकरोत् । नेतृवर्गा-णामभिनन्दनोद्घोषः कण्ठसहस्रेणानेकधा समजायत ।

केवलमेको जनोऽस्मिन्नानन्दोत्सवे भागं नागृह्णात् । सर्वतोऽधिकं यस्य जनस्य स्वातन्त्र्योपलब्धौ प्रयत्नश्रमावा-स्ताम् । स एव गान्धीमहोदयो नवदिल्लीनगरस्य निमन्त्रणं तिर-स्कृतवान् । राष्ट्रस्य कृते तस्मिन् शुभावसरे नायं सन्देशं प्रैषयत । आनन्दोत्सवसमारोहक्षणे विषण्णोऽयमासीत् । मङ्गलघोषं नैव श्रोतुमनेन स्वकर्णौ पिहितौ ।

सम्भिन्नस्य भारतस्य मुक्तिं कामयमानस्य गान्धी-महाशयस्य स्वप्नः साकारतां नागमत् । द्विधा भिन्नं भारतं

विमुक्तं स्वतन्त्रं चासीत्। अयं हिन्दूमोहमदीययोः जात्योः पारस्परिकं प्रेम संस्थापयितुं बहु प्रायतत। किन्तु देशस्यैको भागो मोहमदीयानां राष्ट्ररूपेण पाकिस्ताननाम्ना विभक्तोऽभूत्।

गान्धीमहाशयो नितरां क्लेशमन्वभवत्। यतो ह्यस्य द्वात्रिंशद्वर्षाणां परिश्रमोऽ यशस्करं परिणाममासाद्य समाप्तिमगच्छत्। अयं तस्मिन् दिने उपोषणव्रतमाचरत्, ईश्वरं प्रार्थयत्, तन्तुवायं चारभत।

'भवद्भिर्मानवतायां नैवाश्रद्धा करणीया। मानवता महासागर इव व्यापिका वर्तते। तत्र यदि केचन जलबिन्दवः शुचिरहितास्तिष्ठन्ति तैः सागरोऽशुचिर्न भवतीत्ययं स्वकीयं मित्रं प्रत्यलिखत्'।

अयं सदुःखमवोचत्—'हे ईश्वर! तमसो मा ज्योतिर्गमय'। स्वातन्त्र्यस्यानन्तरं पञ्चनदप्रान्ते उपद्रवो जाज्वल्यमान आसीत्। किन्तु कलकत्तानगरे अस्योपस्थितिर्वङ्गदेशस्य शोचनीयमनुशासनहीनतां न्यवारयत्। यद्यप्येतत् तात्कालिकं निवारणमासीत्।

सेप्टेम्बरमासं यावत् युद्धं समपद्यत। गान्धीमहाशय आत्मनः स्वाभाविकमुग्रमुपचारं समाश्रयत्—'तावदामरण-

मनशनं ममानुष्ठितं स्यात् यावत् हत्याकाण्डं विरमितं न स्यात् । शीघ्रमेवैतत् प्रतिफलितम् लगुडाश्छुरिका अन्यानि च घातकशस्त्राण्येकस्मिन् भागे प्रक्षिप्तान्यभूवन् । नगरस्य समाचारपत्रं प्राकाशयत्—'अयं मरणाय समुद्यतोऽस्ति । यतो हि युद्धकाङ्क्षिणः शान्तिपूर्वकं जीवेयुः' । सेप्टेम्बरमासस्यान्त एतस्य गान्धीमहोदयस्य कार्यं निष्पन्नम् ।

गान्धीमहाशयो दिल्लीनगरस्थितं बिरलाप्रासादं प्रति प्रस्थितः । १९४७ तमख्रिष्टाब्दे अक्टूबरमासस्य द्वितीये दिने तस्याष्टाधिकसप्ततितमे जन्मदिनोत्सवावसरे सपत्नीकः राजप्रतिनिधिः लौर्डमाउण्टबेटनमहाशयस्तमभिनन्दयितुमागच्छत् । अयं बहुधा परिहासयाथार्थ्ये मिश्रयित्वाऽकथयत्—'हिन्दूपरम्परानुसारं मानवजीवनस्यावधिः पञ्चविंशत्यधिकशतवर्षाणि भवति । तावत् कालं जीविष्याम्यहमित्याशासे । किन्तु इदानीमधिकं जीवितुं नेच्छामि । संसारस्तं परिवृत्य स्थितः किन्त्वस्य स्वप्नाः शतखण्डशो भग्नाः' ।

अहमश्रृणवम्—'सार्धसप्तविंशतिक्रोशव्यापिनी प्रचलन्ती हिन्दूजातेः सिक्खजातेश्च शरणार्थिनां पङ्क्तिः पश्चिमपञ्चनदप्रान्ततो भारतीयसंयोजनं सम्प्राप्तेति' । इदं च वृत्तान्तं कथमेषां समाधानं स्यादिति चिन्तनाय मां विवशयति ।

विश्वस्येतिहासे घटनेयमनौपम्यं भजते। इयं च भवद्भिः साकं मामपि लज्जायां निमज्जयति'।

गान्धीमहोदय इमां वार्तां नात्युक्त्योपाचिनोत्। स्वेषां सर्वप्रकारकमधिकारं विहाय शतक्रोशादप्यधिकं पदयात्रां कुर्वन्तः पञ्चदशकोटिमिता जनसमूहाः वैविध्यमन्योन्यं भजमाना अपि सार्धसप्तविंशतिक्रोशव्यापिन्यामेकस्यां पङ्क्तावनुस्यूता महान्तं देशान्तरगमकुर्वंत। ते सर्वे गृहविहीना अकिञ्चनाश्च विहिताः। पञ्चनदप्रान्तस्य पाकिस्तानराष्ट्रमापन्नाद् भागाद् हिन्दूजातेः सिक्खाजातेश्च कतिपयलक्षसङ्ख्याका जना भारतसंयोजनं समागच्छन्। एवं मोहमदीयानां लक्षमिता जनता भारतदेशतः पद्भ्यामेव प्रपलायमानाः पाकिस्तानराष्ट्रमनुप्राप्ताः।

एकस्मिन् समये शरणार्थिनां पङ्क्तिर्विपरीतदिशं संप्राप्य संघर्षमकरोत्। यतोऽनिर्वचनीयस्य सन्त्रासस्य दृश्यानि समुत्पन्नानि। बहवः श्रान्ता बुभुक्षिता आतुराश्च मध्येमार्गमपतन् मृताश्च।

धर्मान्धता जातीयविद्वेषश्च जनेषून्मादं प्रत्यर्पयत्। अस्यामपि परिस्थितौ गान्धीमहोदय ईश्वरे मानवतायां च विश्वासं नैवाजहात्। महतो वैफल्यस्य नितरां हृदयविदारकस्य परमनैराश्यस्य च दुर्दिनमस्य विदितमासीत्। कथमयं तस्य

सम्मुखे स्थातुं प्रभवेत् ? अयमेवं स्वाभिप्रायं प्राकाशयत् 'प्रार्थनयाऽहं जीवनमधारयम् । एतस्या विना बहुकालपूर्वमेवाहं विक्षिप्तः स्याम् । जनतायाः दुःखेषु व्यक्तिगतानुभवेषु च ममाप्यंश आसीत् । अत एव ते तात्कालिके नैराश्ये मां प्राक्षिपन् । प्रार्थनाद्वारेणैवाहमेतस्मान्नैराश्यान्मुक्तः प्राभवम् ।

सत्यमिव प्रार्थनाऽपि मम जीवनस्याङ्गमभवत् । प्रतिदिनमहं दुर्गतिं वैफल्यं चात्यधिकं पश्यामि । यद्यहमात्मनीश्वरास्तित्वं नान्वभविष्यम् प्रचण्डोन्मत्तोऽभविष्यमपतिष्यंश्च हुगलीनद्याम् ।

हिन्दूमोहमदीययोरुत्तेजनयापूर्यमाणे दुखमये नैराश्यभरिते च दिल्लीमहानगरे गान्धीमहाशयस्तदानीं निवसन्नासीत् । अयमगादीत्—'अहं निरालम्बनतयैव सम्पूर्णं जीवनं न यापयिष्यामि' । विना कस्यापि परामर्शेण, अयमामरणमुपोषणं समाचरितुं निरचैषीत् । भारतीयसंयोजने स्थितानां हिन्दूजातीनां मोहमदीयानामथ च पाकिस्तानराष्ट्रे स्थितानां मोहमदीयानां सर्वेषां हार्दिकाभिलाषेण निर्दिष्टमेतदुपोषणं विद्यत' इति प्राकाशयत् । तस्मात् सर्वे जनाः सावधानाः सन्त आत्मरक्षार्थं द्वयोर्जात्योः शान्तिं संस्थापयितुं च प्रायतन्त ।

भारतीयसंयोजनं पाकिस्तानराष्ट्राय देयानि रूप्यकाणि ५५०,०००,००० मितानि प्रदातुं चिरयति स्म । यतो हि पश्चादेतत् पाकिस्तानराष्ट्रेण भारतदेशाय दातव्येषु रूप्यकेषु समन्वयितुमाशां निबध्नदासीत् । इदानीमस्यानुरोधेन त्वरितमेव तानि रूप्यकाणि प्रेषितानि । उपोषणे प्रारभमाणे सत्ययं तथा दुर्बलोऽभवत् यथास्य कण्ठध्वनिः प्रयत्नश्रवणीयोऽभवत् । अन्ततस्तस्मिन् विश्वासमुत्पादयितुं शान्तिं वस्तुतः संस्थापयितुं च विविधानां राजनैतिकदलानां प्रतिनिधिभिः प्रतिज्ञापत्रं हस्ताक्षरितमभूत् । गान्धीमहोदयः सन्तुष्टोऽभवत् ।

प्रार्थना समनुष्ठिता, तस्य प्रियं कीर्तनं कीर्तितम् । पश्चात् गान्धीमहोदय उपोषणं बभञ्ज । गान्धीमहाशयो नियमतः प्रार्थनासभां समचालयत् । अन्तिमोपवासस्य समाप्त्यनन्तरं स्वनिवासस्थानादयं बिरलाप्रासादस्य पृष्ठभागस्थितस्वल्पकक्षतः प्रार्थनासभायामधिपीठं समानीतः ।

द्वितीयदिने तत्र विस्फोटध्वनिरुच्चैरश्रूयत । गान्धीमहाशयमभिलक्ष्य प्रक्षिप्तस्य बम्बपदप्रसिद्धप्रक्षेपणास्त्रस्यायं ध्वनिरासीत् । किन्तु ततः किञ्चिद्दूरे तस्मिन् विस्फुटिते सति तत्रत्योद्यानकुडचस्य भागो भग्नोऽभूत् । अयं सर्वथा संरक्षितोऽतिष्ठत् । अतोऽयमनुद्विग्न आसीत् । 'एतदर्थं न चिन्तितव्यम्' इत्ययं सर्वानुपादिशत् । 'मम कथां शृणु'

इत्यनुरोधं चाकरोत्। मोहमदीयानां संरक्षणाय समुद्धाराय च तदीयमुपोषणं कांश्चन जनानक्रोधयत् । ईदृश्यामपि परिस्थितौ, एतस्य कठोराऽज्ञाऽसीत् यत् प्रार्थनासभायां-प्रविविक्षुः सन्देहदृष्टचा न जिज्ञासितव्य इति ।

इदं १९४८ तमख्रिष्टाब्दस्य जनवरीमासस्य त्रिंशद्दिनात्मकं शीतमयं स्वच्छं च शुक्रदिनमासीत् । उषसि गान्धीमहाशयः परिचारकमकथयत्—'महत्त्वपूर्णानि मदीयानि पत्राण्यानेतव्यानि । अद्यैव सर्वेषां पत्राणामुत्तरं दास्यामि । को जानाति श्वोऽहं स्याम नवे' ति ।

सायं दशक्षणाधिकपञ्चवादनवेलायां, गान्धीमहाशयः प्रार्थनासभामगच्छत् । स्वकीयभागिनेयिसुतयोराभामनुनाम्न्योः-स्कन्धाववलम्ब्य झटिति पञ्चभिः पदैः सभामण्डपमारोहयत् । त्वरितं च मञ्चमासादयामास ।

जनता तमभिनन्दयितुमुदतिष्ठत् । बहवस्तस्योपकण्ठ-मासन् । तत्र केचन तस्य कृते पन्थानमकुर्वन् । अकस्मात् कश्चित् खादीवस्त्रधारी तस्याग्रेसरोऽभवत् । दिवङ्गता मनुदेवी तस्य मार्गं रोद्धुं प्रायतत । किन्तु जनोऽयं तां दूरे प्राक्षिपत् । सा च भूमावपतत् । अयं महात्मनो गान्धीमहा-शयतः पदद्वयमग्रे विद्यमानस्त्वरितमेव गुलिकायन्त्रमुत्थाप्य वारत्रयं गुलिकाः प्राक्षिपत् । एका गुलिका गान्धीमहोदस्योदरे प्राविशत् पृष्ठतश्च निर्गतः । अपरा तस्य हृदयमवेधयत् ।

प्रथमगुलिकाबेधात् गान्धीमहोदयस्याधिरोपितौ चरणावनतौ बभूवतुः। किन्त्वयमवस्थित एवासीत्। द्वितीयगुलिकाबेधादस्याकृतिः भस्मवर्णतां गता। शुभ्रं वस्त्रं रक्ताप्लावितमभूत्। मन्दं मन्दं तस्य हस्तौ पतितौ। सकरुणमवोचदयम्—"हे ! राम !! तृतीयगुलिकाबेधतोऽयं प्रतीपं परापतद् भूमौ। अस्योपनेत्रे भूमौ पतिते उपानहौ च पादाभ्यां बहिरगच्छताम्। आभामनुदेवीभ्यां गान्धीमहोदयस्य शिर उत्थापितः। बिरलाप्रासादस्य तस्मिन् कक्षे तदीयनिवासस्थाने अयमानीतः। दशक्षणानन्तरं चिकित्साविशेषज्ञस्तं मृतमुदघोषयत्। जवाहरलालनेहरू महाशयः स्वकीयकार्यालयात् गान्धीमहाशयस्योपकण्ठं महावेगेन धावन्नागतः। तत्र जानुभ्यां भूमौ तिष्ठन्नयमस्य मुखं तदीयेन रक्तरञ्जितवस्त्रेणाच्छादयत् शरीरं चास्य ससीत्कारमकम्पत।

जनतासु दुःखान्तस्यास्योदन्तस्योद्घोषणं पण्डितनेहरूमहाशयस्य कर्तव्यमासीत्। अयं बिरलाभवनस्य द्वारि गत्वा तत्रैकत्रितान् जनान् प्रति दुखदं समाचारमिमं न्यवेदयत्।

पश्चात् तस्मिन् सायं, राष्ट्रं प्रति वाचिकं सन्देशमसौ प्राकाशयत्—'अस्माकं जीवनेभ्यः प्रकाशस्तिरोहितः। सर्वत्र तम आच्छन्नं विद्यते। न जानामि किं भवद्भ्यो निवेदयनीयमिति। कथं वैतद् दुःखं वक्तव्यमिति। अस्माकं प्रियतमो नेता बापूपदसम्बोध्यः राष्ट्रस्य चास्य जनकः दिवं प्रयातः।

गान्धीमहोदयोऽपरस्मिन् दिने चितायामारोपितः । सार्धक्रोशद्वयव्यापिनी तदीया शवयात्रा दिल्लीमहानगरे यमुनातटे समपद्यत । पुष्पचयैर्मण्डितस्तस्य शवो युद्धयन्त्रयानमारुह्य श्मशानं प्रापितः । तच्च यानं राष्ट्रध्वजवसनैराच्छादितमासीत् । षट्सहस्रमिताः पदातयः पोतवाहाः वायुयानयोद्धारश्च सह संरक्षणाधिकारिभिस्तस्य यानस्याग्रतः पृष्ठतश्च प्रस्थानमुखास्तां शवयात्रां सम्मानयन्ति स्म । तस्यां शवयात्रायां १५०००० पञ्चदशलक्षमिता जनाः पङ्क्तिबद्धाः पथि समदृश्यन्त ।

पण्डितनेहरूमहाशयो नवोपार्जितस्य राष्ट्रस्य गुरुतरमुत्तरदायित्वं स्वकीयबाह्वोरवस्थितमथात्मानं विरहितं निराश्रितं चामनुत । तस्यान्तिक इदानीं राष्ट्रपिता तदीयपृष्ठपोषको नास्ति । क एनं समुचितं विचारं दास्यति दिङ्निर्देशं च विधास्यति ? रामदासमहाशयः पितुः श्मशानकृत्यं समपादयत् । नितान्तं दुःखदं दृश्यमेतदासीत् ।

प्रत्येकं जनः रुदन् समदृश्यत । आर्तनादः करुणविलापश्चोर्मिमालायुतजनसङ्कुलतोऽश्रूयत । प्रज्वलितायां चितायां गान्धीमहोदयस्य शरीरं भस्मसादभूत् ।

सर्वदा प्रमुखतमेषु नेतृषु गान्धीमहोदयः सर्वतोऽग्रतः पङ्क्तिक्रमेण स्थाप्यते । दार्शनिको महात्मा शिक्षको

धर्मोपदेष्टा लेखकः सभावक्ता चायं सर्वदा नितरां विनीतः उर्जापन्न कठिनकार्यसम्पादकश्च विश्वस्यैव पिता मित्रं चासीत् ।

अयं संसारे प्रबलतमस्य साम्राज्यस्य मूलमकम्पयत् । शक्तिशालिना शासकेन राजप्रतिनिधिना सहायं युद्धायोद्यतः स्वयं दरिद्रस्य जीवनमयापयत् । अस्पृश्येन सह नितरां विनयमाचरच्च ।

यद्यपि देशेऽस्मिन्ननुत्तमं वस्त्रं समुत्पादितमभूत् । तथापि मुकुटविरहितः राजऽसौ साधारणमेव हस्ताभ्यां तन्तुवापितं धौतवस्त्रं परिधारयन्नासीत् । यथार्थतः कोटिमिताया जनतायाः कृतेऽस्य जीवनमासीत् । या खलु जनताऽमुमन्वव्राजीत् । अयमपि तस्याः कृते मरणार्थमुद्यत आसीत् । सुकोमलशरीरधारी मानवोऽयं भीमकायस्य वर्चस्वमात्मनि धारयांबभूव । कीदृशोऽयं मानव आसीदिति प्रश्न एव समेषां समक्षमस्ति । किं गौतमबुद्धात् पश्चादयमेव भारतीयो महात्मा उच्चतम उच्चतरो वाऽभवदितीतिहासमेवोत्तरयिष्यति ।

———

